नारायणपण्डिताचार्यविरचितं

# शुभोदयम् ।



श्रीसोदावादिराजमठः
उडुपि

# INTRODUCTION

by

VIDYABHUSANA DR. B. N. K. SHARMA, M.A.,PH.D.,
Professor of Sanskrit, Ruparel College, Bombay-16

Sri Narayana Panditacarya is one of the leading Sanskrit poets in Dvaita Literature, next only to his father, the celebrated Trivikrama Panditacarya of *Ushaharana*-fame, in rank. He has some half a dozen Kavyas to his credit. They are (1) the *Samgraha Ramayana* (2) *Anumadhvavijaya* (3) *Manimanjari* (4) *Parijataharana* (5) *Subhodaya* and (6) *Sumadhvavijaya.* The last-named, is his masterpiece. He might be dated roughly between 1300-1360 A D.

The *Subhodaya-Kavya*, now published by the Svamiji of the Sode Mutt, is a unique Kavya, in two respects. It is, first of all, an allegorical poem. The only other examples of this kind, known to Sanskrit literature, are in the field of Drama such as the fragment of Asvaghosha, the *Prabodhacandrodaya*, *Samkalpasuryodava*, *Amrtodaya*, etc. The use of the term "Udaya" in this allegorical Kavya also, is significant. Hence special importance attaches to this allegorical *Kavya* which is almost the only one of its kind in mediæval Sanskrit literature. For a full account of the life and other works of Narayana Panditacarya, attention is invited to my English introduction to the edition of his *Madhva-Vijaya* published by the Pejavar Mutt (Udipi, 1951).

An adhyatmic allegory underlies the present Kavya. Its inspiration should be traced to themes like the *Puranjanopakhyana* in the *Bhagavata*, the story of the Man in the Well in the *Mahabharata* and so on, where the Adhyatmic allegory

(iii, 60) प्रतिचस्करे (iii, 67) आदीनव (iii, 6) कण्ठद्वयस (iii, 87) सामि (iv, 121). There are some phrases borrowed from Trivikrama (cf. सनीरनीरद iii, 1, 1) and anticipations of his own phrases and lines (as in ii, 25; ii, 91) in the *Madhvavijaya*, *Samgraharamayana*, etc. Vargas 11 and 12 of the iv Kanda however embody the highest pitch of natural eloquence and simplicity of expression in the whole poem and deserve to be memorised by all.

The real merit and value of the work thus lies *not* in its artistic beauty or appeal, but in its underlying allegory and in its providing a training ground in the intricacies of metres and Bandhas, to aspiring poets and a manual for consultation on metres and their complexities. It is from these two points of view that the work is entitled to praise and recognition in mediæval Sanskrit poetry. A distant parallel that can be mentioned is the *Bhattikavya* where the narrative (Rama's story) goes hand in hand with the pragmatic purpose of illustrating the grammatical rules and forms.

The earliest and almost only reference to the *Subhodaya* is in Sumatindra Tirtha's commentary on the *Ushaharana* (viii, 2) as first pointed out be me in the *Annals of the B. O. R. I. 1939*. The work is otherwise altogether unknown and forgotten in Dvaita Literature. Even manuscripts of it are very rare and *hitherto unknown*. No small credit is therefore due to the young and enthusiastic Svamiji of the Sode Mutt, Sri Visvottama Tirtha, for his *discovery and publication of this unique work of Narayana Panditacarya* which, despite its peculiar features of allegorical presentation and plunging into metrical complexities, had fallen into undeserved oblivion. *Freedom from 'sectarian' ideas is another striking feature of the work.* All lovers of Kavya literature in Sanskrit would thus be gratelul to the Svamiji for having made this learned

work of the famous Narayana Pandita, accessible to them. It is a valuable addition to Sanskrit Kavya literature in general and an indisputable proof of the mettle of Sanskrit scholarship and literary calibre of the great *writers from the land of Tuluva*. I render my warmest thanks to the Svamiji for having assigned to me this very pleasant task of introducing this most interesting and unique work of Narayana Panditacarya to the Sanskrit-reading public.

श्रीनारायणपण्डितार्यरचितं सत्काव्यमत्युज्ज्वलं
नानावृत्तसुबन्धबन्धुरतमं चित्रैः प्रयोगैर्युतम् ।
अध्यात्मप्रचुरैः परोक्षवचनैः शास्त्रार्थजातैर्लसत्
सर्वालंकृतिमच्छुभोदयपदं विद्वद्भिरासेव्यताम् ॥

---

# प्रस्तावना ।

व्यासाय भवनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥
तपोविद्याविरक्त्यादिसद्गुणौघाकरानहम् ।
वादिराजगुरून्वन्दे हयग्रीवदयाश्रयान् ॥

इदमिदानीं विदाङ्कुर्वन्तु तत्रभवन्तो महाजना योऽयमस्माभिरधुना प्रकाशितो ग्रन्थः शुभोदयो नाम न व्यसनितया, नापि यशस्काम्यया, न वा प्रभुताभिमानेन; किन्तु मध्वविजयादिसिद्धमन्त्रात्मकशुद्धग्रन्थरचनाचणाः प्रत्यक्षीभूतश्रीमदानन्दतीर्थगुरुवर्यगुरुतमप्रसादसमासादितनिरवद्यविद्याः कविकुलाग्रण्यो नारायणपण्डिताचार्या इमं ग्रन्थं व्यररचन्निति विदत्स्वेव प्रायो विरलेषु अकस्मादस्माभिरुपलब्धं विनश्यदवस्थं ग्रन्थमिमं प्लवङ्गममणिन्यायेन चेद्विसृजेम, भृशमनुशयिनोऽकृतकृत्या भवेमेति विमृश्यकारितयेति ॥

आपाततोऽयं ग्रन्थः कश्चन शुभं नाम नायकमधिकृत्य कृत इव भासमानोऽपि शब्दशक्तिमूलध्वनिना पुरञ्जनोपाख्यानमिव प्राधान्येनाध्यात्मिकविचारे प्रवण इति सुधियो विभावयेयुरित्यस्माभिः सम्भावितमस्य ग्रन्थस्य विमर्शं निबध्नतां DR. B. N. KRISHNAMURTI SHARMA, M.A., PH.D. इत्येषां महाशयानां दृष्टिपथमुपारूढं सत् पुष्यति ॥

त इमे विमर्शकाश्चास्य (ग्रन्थस्य) कृष्णमूर्तिशर्ममहाशया ग्रन्थमिमं निर्भरं परिशील्य ग्रन्थस्यास्य वैशिष्ट्यं ग्रन्थकर्तुश्च नैपुण्यं परि-

चिर्ति च साध्वत्र, अन्यत्र च विश्वपतिव्याख्यायुतमध्वविजयग्रन्थे पुरोवादे स्वयमञ्जसा व्याञ्जिषुः ॥

अस्य प्रकाशनेऽस्माभिरपेक्षितानि लिखितपुस्तकानि पुरातनानि विकलान्यपि सुरक्षितान्यस्माकं वितीर्णवतः पुत्तिकामठाधीश्वर-श्रीसुज्ञानेन्द्रतीर्थश्रीपादान्, पेजावरमठाधीश-श्रीविश्वेशतीर्थश्रीमच्चरणांश्च साभिवादं; फलिमारुमठाधीश-श्रीरघुवल्लभतीर्थश्रीपादांश्च सादरमभिनन्दयामः ॥

असदाशयमनुरुध्य यथाकालं सुस्पष्टाक्षरैरभिरामं मुद्रितवतां पावञ्जे गुरुराव् अण्ड् सन्स् एषां स्वकर्तव्ये शक्तिसाहसादिकं भगवान् प्रयच्छतादिति सुकृतीष्टतमं तमुपतिष्ठामहे ॥

सोदामठः,<br>उद्यावरमठः ॥<br>१-९-१९५७

**श्रीविश्वोत्तमतीर्थश्रीमच्चरणाः**<br>श्रीसोदा-वादिराजमठाधीशाः ।

## शुद्धाशुद्धपत्रिका ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| उदधिमद्विव्धिर्यधित | उदधिमद्विधिर्व्यधित | १ | १४ |
| श्रीलोकनाथाक्रमे | श्रीनाकलोकाक्रमे | २६ | १२ |
| नेत्राञ्जन | नेत्रांजन | ४३ | १७ |
| व्रजिनैधो | वृजिनैधो | ६३ | १ |

॥ श्रीः ॥

॥ श्रीमध्वेशहयवदनाय नमः ॥

॥ श्रीभाविसमीरश्रीमद्वादिराजगुरुभ्यो नमः ॥

नारायणपण्डिताचार्यविरचितं

# शुभोदयम्

श्रियमपूर्णपदां स्वयशोमयीमिह बहिश्च विकासमिवानयन् ।
उपरि यो जगदण्डमदारयत्तमुरुविक्रमपादमुपास्महे ॥ १ ॥
त्रिपथगां समया त्रिदिवोपमं विरचितं कृतिना सुरशिल्पिना ।
सुकृतिनामपुरं सुकृती पुरा शुभ इति प्रथितोऽध्यवसन्नृपः ॥ २ ॥
प्रकृतिवर्गमलं वशयन् परान् विजितवानतिविस्मयकर्मणा ।
स भरतस्य सुतां पृथुलोचनां सुमतिमाप्य तयाऽरमतानिशम् ॥ ३ ॥
स्वरमणीं रमणीयगुणां विना नरपतिर्निरियाय कदाचन ।
अभिमतान्विषयानभिवीक्षितुं विषयचारिभिराप्तभटैर्वृतः ॥ ४ ॥
विषयतो विषयान्तरमाव्रजन् प्रकृतिभिः प्रकृतिं गमितोऽपराम् ।
वनमपश्यदितां प्रमदामसौ सपदि काञ्चन काञ्चनसन्निभाम् ॥
रतिपतेरतितीक्ष्णतरैश्शरैर्दलितहृद्दमवर्मविदारिभिः ।
प्रमदमेष चमूपतिमाश्रितो वचनमेतदुवाच सुलोचनाम् ॥ ६ ॥
त्वमसि का कमलायतलोचना भवति कः करुणाविषयस्तव ।
सकलकान्तिरसोदधिमद्धिविधिर्यधित तन्वि सुधां भवतीं पराम् ॥
सुमुखि ते मुखचन्द्रमसं मुहुः प्रति हतः पतितः पुनरुत्पतन् ।
न लभतेऽतिचलो बत कन्दुको भवति कोऽनुचिते सफलः श्रमः ॥

वनितान्तरान्तरवरानवेक्षणे
स्वयमार्य कार्यमवधार्यतामिदम् ॥ १४ ॥
निशमय्य दूत्यभिहितं विषण्णधीः
प्रमदादिभिः परिजनैः प्रचोदितः ।
अयि मण्डलेश भव चक्रवर्तिनः
सुसखोदयार्थमिति सोऽन्वमोदत ॥ १५ ॥
इति तं निबध्य नियमेन मानिनी
रमयाम्बभूव रमणीयविभ्रमा ।
अपि धर्मशीलमिव रुग्मभूषणं
प्रतिपादिता विधिबलेन मोहिनी ॥ १६ ॥
नवसङ्गमे समधिकत्रपाकुलां
तरुषण्डमध्यधि तिरोहितां किल ।
विजनं लतालयमितोऽपनीय तां
सुरतोत्सवाननुबभूव भूपतिः ॥ १७ ॥
सरसीरुहां सुरसरस्वतीरुहां
सुरभिं रजोभिरथ मन्दमारुतम् ।
दयिताक्लमाम्बुनुदमेष मानय-
न्नलुनाद्वने सुमनसः सुमानसः ॥ १८ ॥
कुसुमानि तुङ्गतरुसङ्गिनीं लता-
मपकृष्य दुस्स्थपदया लुनानया ।
स्फुटबाहुमूलवलि बालयाऽऽश्रितः
पतनच्छलात् स परिरभ्य निर्ववौ ॥ १९ ॥

चपलता पदपद्मयुगस्य ते भुवि ममेव भवेदतिरागिणः ।
तव दृशा कथमायतमानया सदृशया तव नाचलयाऽऽस्यते ॥ ९ ॥

अलमलमतिलीलासम्भ्रमैर्वृत्ततुङ्ग-
स्तनभरपरिखिन्नो भज्यते चण्डि मध्यः ।
इदमधिकमयुक्तं स्वं कृशं भङ्गभीरुं
न वहति कृतमाना त्वादृशी चेत्पुरन्ध्री ॥ १० ॥

॥ इति द्रुतविलम्बितवर्गः प्रथमः ॥

---

इति भावगर्भमवनीपतिं वचो
निगदन्तमाप्तमवलोक्य लज्जिता ।
शिथिलां निबध्य कबरीं समेखलां
स्तनपट्टिकां च तरुणी तिरोदधे ॥ ११ ॥

प्रहिता तयाऽऽलिरिदमब्रवीन्नृपं
ननु मानवेन्द्र कुशली प्रवर्तसे ।
यशसा तवातिविशदेन मोदते
जगती यथा कुमुदिनीन्दुतेजसा ॥ १२ ॥

अभिकामिनीत्यभिहितामवेहि भो-
स्तनयामिमामरुणचक्रवर्तिनः ।
प्रवणीकरोति न परं भवादृशा-
नमरासुरांश्च यदपाङ्गविभ्रमः ॥ १३ ॥

अपकृष्यते तव गुणैः सुमध्यमा
स्वकुलोचितेन नियमेन रुध्यते ।

अजनि विहरतोऽपि तस्य रागो
विधुधवले द्युसरस्वतीप्रवाहे ।
अरुणमणिरुचा तयाऽतियोगात्
सुपरिचिता गुणिनो गुणं हि दद्युः ॥ २० ॥

॥ इति मंजुभाषिणीवर्गो द्वितीयः ॥

---

नन्दने जनमनोभिनन्दने मन्दरादिषु विहारभूमिषु ।
मानिनी विविधयोगमायिनी तं प्रणीय रमयाम्बभूव सा ॥ २१ ॥
सोऽनुनीय पुरमेव नीतवान् वल्लभामनुचरानुमोदितः ।
उत्सवे (व)परवधूसमागमे नागरैर्नगरमत्यभूष्यत ॥ २२ ॥
सा समैक्षि सुदृशा पुरी नवद्वारगोपुरगृहापणान्विता ।
सप्तवप्रपरिवेष्टिताऽऽयता व्यक्तमेकशतमार्गसङ्कुला ॥ २३ ॥
विद्रुमस्फटिकसम्मिलन्महानीलरत्नमयमेव शोभते ।
यत्र कृत्स्नमपि कारुणा कृतं काञ्चनैर्मरतकैश्च चित्रितम् ॥ २४ ॥
यत्र दग्धुमिव वह्निमुत्थितं मध्यतः प्रशमयेत् सुरेरिता ।
स्वादुमत्यपि नदी दिने दिने बाडबाग्निमिव सैन्धवं जलम् ॥२५॥
जाग्रदेव बलवान्दिवानिशं यक्षराजविहितोऽभिरक्षति ।
यां च पञ्चफणकञ्चुकीश्वरो गां हिरण्यनिधिगर्भिणीमिव ॥ २६ ॥
यत्र यक्षपतिसद्म भासते कैश्चिदप्यविदितान्तरोदयम् ।
यद्विशत्यहरहः पुराधिराडेक एव विवशोऽतिमुग्धवत् ॥ २७ ॥
विश्रवःप्रभृतयश्च मन्त्रिणः किङ्कराश्च सुमुखादयोऽवसन् ।
पञ्चपञ्चसदनेषु यत्र तान् प्रेषयन्नृपसुहृच्च चित्रगुः ॥ २८ ॥

कान्तिमत्प्रमदलोभनासहाः साभिमन्युपरिमोहनाः सदा ।
यत्र भूपतिममात्यपुङ्गवा नो जहत्यपि निजावरोधगम् ॥ २९॥
दृष्ट्वा तुष्टा प्रकृतिनिकरं तं प्रकृत्याऽऽत्मनीनं
कामं कामैः प्रमदमनयन्मानिनी मानयन्ती ।
सर्वैः पूर्वैः सुमतिविमुखः प्राप तत्रानुरागं
विश्वं वश्यं भवति चपलं दानमानैरवश्यम् ॥ ३० ॥

॥ इति रथोद्धतावर्गस्तृतीयः ॥

---

अथ माधुरादिविषयान् बुभुजे सह पञ्चपञ्चसचिवः प्रियया ।
अरुणेन ये द्विगुणिता विषयान् ददताऽऽत्मनो दुहितृमाननया ॥
रहसि प्रियां प्रणयकोपवतीं प्रणयी प्रणीय शनकैः प्रणमन् ।
सममारुरोह शयनं स तया त्रिदिवं कृतीव वृषवासनया ॥३२॥
परिणायकस्य परिरम्भमहे विपुलस्तनी मुदमवाप पराम् ।
सकलाङ्गसङ्गसुखभङ्गकृते निजभूषणाय कुपिताऽपि मनाक् ॥३३॥
अतिवेलकान्तिजलधेः सुतनोः स्मरमन्दरेण गुरुणा क्षुभितात् ।
उदितं स्मितेन्दुमभिनन्द्य पपावधरामृतं च स तदोपनतम् ॥ ३४॥
प्रियकर्मणोऽनुगुणकर्मगुरुः स्वयमेव या तनुमलङ्कुरुते ।
सुरतप्रसङ्गमवगम्य तदा सुदृशस्त्रपा प्रियसखी(व) च ययौ ॥३५॥
प्रणयोदितं सकरुणाभिहितं मणितं ससीत्कृतमलंवचनम् ।
इदमङ्गपञ्चकमुपांशुतरं सुरतं समस्कुरुत मन्त्रमिव ॥ ३६ ॥
अधुना न तन्निधुवनातिशयः प्रतिवर्ण्यते भुवनविस्मयदः ।
विवशीकृतो झटिति येन नृपः सुमतिं सतीमपि सतीं विजहौ ॥

सह याति याति यदि साऽत्ति यदा समभत्ति शोचति च शोचति चेत्।
रमते यदा स रमते रमणो रमणीं सदेति भृशमन्वकरोत् ॥ ३८ ॥
सकलाङ्गलीनवपुरर्धमियं कथमत्यसुप्रियतमासुसमः ।
अहमेव हीत्ययमबोधि वधूमपृथङ्मतां मदनमोहवशः ॥ ३९ ॥

सुप्तायां प्रकृतिजनैः समं प्रियायां
मायावी सुहृदनयत्तमन्यलोकम् ।
सुप्तोऽस्मिन्नपि सुचिरं विहृत्य नित्यं
यक्षौको विवशतयाऽविशन्महीशः ॥ ४० ॥

॥ इति प्रमिताक्षरावर्गश्चतुर्थः ॥

---

दयितेन विवासिता सती सुमतिर्मङ्क्षु तताम मानिनी ।
अपि नाथवती विनाथवत् करुणं सा विललाप सुव्रता ॥ ४१ ॥
अयि नाथ विधे विधेहि मे मरणं त्वं शरणप्रदोऽसि चेत् ।
ननु वैतरणी गरीयसी स्वसपत्नीजनतर्जनानलात् ॥ ४२ ॥
रिपुनिन्दनमात्मनिन्दनं दयितस्याप्रतिभाषणं सदा ।
मृषितं न मया विवासनं मृषितं क्षाम्यत धर्मसाक्षिणः ॥ ४३ ॥
इयमालि निधीयतां त्वया मणिमाला भरतप्रिये जने ।
सुजनं मम सान्त्वय प्रिये सुजनं प्रार्थय मे शिवां गतिम् ॥ ४४ ॥
इति तां प्रविलप्य विद्रुतां दमयन्तीमिव कान्तवर्जिताम् ।
प्रविविक्षुमहो महानलं घनकालोऽजगरोऽग्रसत्किल ॥ ४५ ॥
अपरागविनीतभूरिदाः प्रतिमर्षः सुविवेकनिस्पृहौ ।
अवलोक्य सपत्नसंश्रयं षडमात्या नृपतिं व्यचिन्तयन् ॥ ४६ ॥

प्रहितो हितकृत्पुरोहितो हिततन्त्रैरहितैर्महीपतिम् ।
सदसीदमुवाच सुश्रवाः सुरपूज्यस्सुरपुङ्गवं यथा ॥ ४७ ॥
सुहृदस्मि कुमारतादि ते नृप! विश्वासमुपेहि वाचि मे ।
ननु साप्तपदीनशब्दिता सखिता दम्पतितेव सज्जने ॥ ४८ ॥
करखण्डनमाप भास्करः क्षयमिन्दुर्जरसं च नाहुषः ।
दयितागसि सत्यतस्त्यजन् सुमतिं त्वं सगणां विपत्स्यसे ॥४९॥

मित्रच्छलेन पुरि वृत्तममित्रवर्गं
सन्त्यज्य कामुकरतामभिकामिनीं च ।
राजर्षिणाऽत्र भवता भरतस्य पुत्री
गृह्येत शुद्धसचिवाश्च शुभोदयाय ॥ ५० ॥

॥ इति वैतालीयवर्गः पंचमः ॥

---

गिरं गुरोर्गुणगुरुमेष शुश्रुवा-
ञ्छुभः शुभां सखिमुखचन्द्रमैक्षत ।
घनस्वनं प्रकृतिजनाब्धिमुद्धतं
स तत्क्षणक्षुभितमवैक्षताग्रतः ॥ ५१ ॥
रिपुं प्रियं प्रियमपरं विधित्सतां
नृणां वचो नरवर! मा स्म विश्वसीः ।
अशङ्किनां सदसि च मायिनां यथा
तृणं मणिं मणिमपि कुर्वतां तृणम् ॥ ५२ ॥
नदीरुधः प्रसभमुपस्कृतिच्छिदः
पुरे पुनस्तव पुरतोऽखिलद्रुहः ।

अमी प्रिया यदि विषयस्य दूषका
ध्रुवं भवान् भवतितरामकिञ्चनः ॥ ५३ ॥
न कामिनी न विविधविभ्रमोन्मुखी
मदालसा न च न च जातु मद्यपा ।
कथं रतिं वितरति ते पुरातनी
वियोगिनी सुमतिरतोऽस्तु योगिनी ॥ ५४ ॥
प्रजापतिं पुरपतिमीश्वरं विना
क इष्यते शुचिभिरनन्यभक्तिभिः ।
लघुर्भवानिति ननु यक्षमार्चिच-
न्निमे शठा धिगुपपतिं यथा स्त्रियः ॥ ५५ ॥
व्रजत्यसावपि दिवि कामिताऽऽरुणी
विधेर्वरादनुदिनमङ्ग कन्यका ।
सह स्थितिर्न हि घटते बतानयो-
र्विरुद्धयोस्तिमिररवित्विषोरिव ॥ ५६ ॥
इतीरितं वचनममात्यपुङ्गवै-
स्समन्त्रिकैः सुमुखमुखैरपूज्यत ।
क्षणत्रपामरुणसुतां स्थिरक्रुधं
यियासुमानमदनुनायको नृपः ॥ ५७ ॥
अधार्मिके सति सशुभे सभाजने
न धर्म इत्ययमपवादकृत्स्फुटम् ।
सुरान्वदन्निव भृशमुद्दधे भुजौ
निराश्रयो विदुर इवाथ सुश्रवाः ॥ ५८ ॥

तमुन्मदाः स्फुटहसिता मदादयः
प्रचिक्षिपुः परमवमृद्य कर्षकाः ।
निगूढया गुरुकृपयोद्गताश्रुणा
न याचिता नरपतिना न्यषूदयन् ॥ ५९ ॥
पुरपतिगुरुं दूतं दान्तं द्विजं श्रुतिपारगं
निजगणपरिभ्रष्टं चण्डा न मारयतात्र हा ।
परमकरुणा वाणीश्रेणीति पौरमुखोद्गता
श्रुतिपथमगात्तेषां पुंसां क्षमागुणकृन्तनी ॥ ६० ॥

॥ इति रुचिरावर्गः षष्ठः ॥

---

सन्नह्य वर्माण्युपगूह्य धैर्यं
सङ्गृह्य हेतीरधिरुह्य वाहान् ।
चमूमवन्तश्चतुरङ्गरूपां
निर्जग्मुरार्या अपरागवर्याः ॥ ६१ ॥
दिवं भुवं साङ्गमुताश्रुवान-
मुत्पातमुत्प्रेक्ष्य च जोषमाप ।
अवार्यवैरं स्वजनं विवेकी
न मानिनामापदि चापलं स्यात् ॥ ६२ ॥
माध्यस्थ्यमध्यास्थितमीशमुर्व्या
नीत्वाऽऽत्महीनत्वमनिन्दिताङ्ग्या ।
सचित्रगुण्यस्य पुरः ससैन्याः
प्रत्युद्ययुः कान्तिमदादयस्तान् ॥ ६३ ॥

अजन्यहो जन्यमनन्यजन्यं
चित्रं कुरुक्षेत्रमुपागतानाम् ।
परस्परेणैव शुभानुगानां
पुरा कुरूणामिव वैरभाजाम् ॥ ६४ ॥

लेभे कलिं कान्तिमताऽपरागो
वीरो विनीतः प्रमदेन साकम् ।
भूरिप्रदो लोभनमाससाद
स्थिरोऽभिमन्युं प्रतिमर्ष आप ॥ ६५ ॥

अस्पर्धनोऽयादसहं निहन्तुं
विमोहनं प्राप महाविवेकः ।
ते द्वन्द्वयुद्धोत्सवमापुरेवं
चिरं चिरापेक्षितमक्षताङ्गाः ॥ ६६ ॥

चक्रेण चक्रेऽभिहते च षट्कैः
क्षोदैरुतान्धीभवति स्म लोकः ।
प्रतीपुपातै रुधिरद्रवैश्च
तेषां प्रशान्तौ स्वबलोक आसीत् ॥ ६७ ॥

यथा समस्तारिरथैर्धरित्री
हेमप्रदीप्तैस्समरोत्सुकानाम् ।
तथा वियत् संख्यदृशां विमानैः
सुरासुराणामतिभासुरा(ऽभूत्)णाम् ॥ ६८ ॥

षडेव षड्भिः परिणद्धयुद्धा
मिथो मुहुश्चाकरणान्विधाय ।

१ 'संप्रहाराभिसंपातकलिसंस्फोटसंयुगा' इत्यमरः ।

वैरानलं रूक्षवचोनिलेन
प्रदीपयन्तो युगपद्व्ययुध्यन् ॥ ६९ ॥
क्रमक्षीणप्राणैर्व्यवधिशरणैरारुणभटै-
र्विसृष्टा मायाऽभूज्जगति वितता त्रासजननी ।
उदेत्य ज्ञानास्त्रं स्मृतमथ परैस्तामशमय-
त्तमिस्रां तामिस्रीमिव दिनमणेर्बिम्बमतुलम् ॥ ७० ॥

॥ इत्युपजातिवर्गः सप्तमः ॥

---

नियोगतश्चैत्रगवाद्विचित्रतो
दिशामिवेशा दश ते महाभटाः ।
अपीपलंस्तानथ कान्तिमन्मुखान्
पराजयाद्व्यक्तमकान्तिमन्मुखान् ॥ ७१ ॥
षडप्यमी षोडशभिर्महाहवे
समानभावेन समानतां ययुः ।
इदं न चित्रं खलु यैः पुरातना
यतः सहस्रं सह कोपपावकाः ॥ ७२ ॥
स्वमस्तमस्तं विविधास्त्रमन्ततो
निरस्तमालोक्य परैस्तु भारताः ।
प्रणम्य नारायणमस्त्रमस्मर-
ञ्छिवाय नारायणदैवमापदि ॥ ७३ ॥
महो महास्त्रस्य महेषुधारितं
क्षणात्प्रदीप्तं विततं जगत्त्रये ।

न भस्मतां यावदयापयद्रिपून्
बभूव तावद्दिवि काऽपि भारती ॥ ७४ ॥
अमोघमस्त्रं न विमुञ्चताधुना
न पुत्रका वः समयोऽयमृद्धये ।
भवेदुपायो विषये नियोजितो
भवाय पुंसामिति शान्तिमृच्छत ॥ ७५ ॥
पुरा शुभः कालिकया हृतं परं
निशम्य राज्यं निजमस्य लिप्सया ।
चरन् कुमारोऽपि चिरं तपो मुनिं
ददर्श हंसान्वयमाश्रमागतम् ॥ ७६ ॥
तपःफलं मूर्तमुपागतं ध्रुवं
ममेति निश्चित्य नरेन्द्रनन्दनः ।
प्रसादयामास मुहुः प्रणम्य तं
समग्रसिद्धिर्हि सतां समागमः ॥ ७७ ॥
प्रसन्नधीस्तं सदयोऽब्रवीद्व्रती
भवन्त्वमात्यास्तव भारताः श्रिये ।
स्वसा च तेषां महिषी यया सुत-
स्तव प्रसूतः स्वरिपून् जयेदिति ॥ ७८ ॥
अवाप्य तस्यानुचरं पुरोधसं
प्रियां च युष्मान् सचिवांश्च लब्धवान् ।
तया निषिद्धोऽपि स कालिकोपधेः
पपौ मधु स्वव्यसनाङ्घ्रिपाङ्कुरम् ॥ ७९ ॥

मत्ते मत्तमतङ्गजौजसि नृपे काल्याः प्रसङ्गाच्चलो
विद्राव्य व्रतिनं तमेव नगरीमध्यात्त वस्तामसः ।
शापोऽस्माद्गुरुहेलनाद्व्यरहयत्प्रेष्ठां चिरं वैधस-
स्तस्यान्ते स भजेदिमां लयममी कालीजपुत्रा इति ॥

॥ इति वंशस्थवर्गोऽष्टमः ॥

---

वर्षो गवां गगनगोऽशमयत्स तेषा-
मस्नानलं च विपुलप्रतिघानलं च ॥ ८१ ॥
विश्वं बताश्नुवत तेऽरुणजा विजेत्र-
म्मन्याः प्रवासिषु परेषु सकालकाङ्क्षम्
निर्मूल्यमानसुकुमारशुभारविन्दं
हंसेष्विवाधिकबलेष्वबला बलाकाः ॥ ८२ ॥
संन्यासिनो नियतियत्यभिधाः शुभार्थं
येऽत्र त्रिसन्ध्यमपि यक्षबलिं निरूहुः ।
स्नानानृतादिगणिकाभिरदुद्रुवंस्तान् ।
मा मेति वादिनि नृपे परिहस्य धूर्ताः ॥ ८३ ॥
व्यामोत्समस्तविषयं जलदालिकाली
काली करालकरवालतटित् क्षपेव ।
त्यक्तं पुरा विततभारतभानुभासा
रक्तं निधाय पुरतः स्वजनं प्रदोषम् ॥ ८४ ॥
लीलावलोकलवसुन्दरमन्दहास-
भ्रूविभ्रमैर्विवशितः प्रिययोपगूढः ।

राजा न वेद सुचिरं क्षरदेव तेजः
स्वं गाधिसूनुरिव मेनकया मनस्वी ॥ ८५ ॥
आकर्ण्य भारतगतिं किल नारदोक्तां
पुर्यां निसर्गरिपवो यवनेन्द्रभृत्याः ।
मत्तैः खलैः कलुषितेषु जलेषु नद्या
मग्ना इभेन विविशुः पुरमाशु केचित् ॥ ८६ ॥
उद्वेलवारिधिमहौघवदापतन्तः
क्रुद्धा ज्वलज्ज्वलनवज्ज्वलनाः करालाः ।
कल्पान्तवातजवनाः पुरमाक्रमन्त
भूयो गदाविविधमुद्गरघोरशूलाः ॥ ८७ ॥
तान् वप्रसप्तकविदारणदारुणाजीन्
राजेरिताः प्रतिययुः पुरपा बहिष्ठाः ।
नानागदा मगधजाक्षशिवाभयाद्याः
क्षेपीयसोपि यवना निरकासयंस्तान् ॥ ८८ ॥
सिन्धोर्बबन्धुरिह केचन सेतुमन्ये
द्वारं पुरो रुरुधुरप्यदहन् परे ताम् ।
पौरान् प्रजहुरपरे पतिमेव केचि-
ल्लङ्कामिवेति कपयोऽक्षपयन् पुरीं ते ॥ ८९ ॥
वीक्ष्य क्षिप्तमिमं विपक्षरभसं सङ्क्रन्दनत्रासदं
चोराः कान्तिमदादिभोग्यवशदास्तेऽन्तःपुरेऽन्तर्दधुः ।
युध्यन् किङ्करमन्त्रिचित्रगुसखः पञ्चाननः कञ्चुकी
क्षीणे राज्ञि परैः क्षते निपतिते बद्धे शुशोचाधिकम् ॥ ९० ॥

॥ इति वसन्ततिलकावर्गो नवमः ॥

यवनैरतितीव्रपूर्ववैरैरपिनह्यातनु ताडितोऽत्र वेत्रैः ।
सुकुमारतनुर्विमूर्च्छितो ही स महीपो ददृशे प्रियेण सख्या ॥९१॥
स निरीक्ष्य महीशयं महीशं खचितं रेणुभिराक्तमुग्ररक्तैः ।
अवधार्य मृतं विभिन्नधैर्यः स्रवदस्रो विललाप पादपाती ॥ ९२ ॥
नरनाथ! हतोऽस्मि हा न पश्यन् वदनेन्दुं तव सुस्मितावलोकम् ।
अयि नाथ नयापि मामनाथं करुणां त्वं करुणाकरो हि कुर्याः॥९३॥
पदयोः पतिता विकीर्य केशान्निजमङ्गं मुहुरङ्ग! ताडयन्तीः ।
अभिनन्दय सुन्दरीशतं ते विरणन्तीः कुररीरिवारिहृद्याः ॥ ९४ ॥
क्व नु सा सुमतिर्विवासिताऽऽसीद्भवता मच्छरणेन धर्मपत्नी ।
अनुरूपमिदं ददौ विधाता व्यसनं नौ फलमस्य पातकस्य ॥ ९५ ॥
सुमते! तव वल्लभं विपन्नं सति! सञ्जीवय देवि योगशक्त्या ।
अपराधसहस्रमप्यसह्यं सहमाना द्रुतमेहि चारुहासे! ॥ ९६ ॥
यवनेश्वर एव युद्धमध्ये भवता भारतबन्धुना बबन्धे ।
अधुना विधिना निरस्तबन्धुं यवनास्त्वां न्यहनन् हि चित्रमेतत् ॥
समवृत्तपयोधरा विराजत्परिवारा परुषेतरा कृपाण्या ।
तुलिताऽरुणजा निहन्ति सारिं निजभर्तारमियं विशेष एषः ॥९८॥
परदूषणतो न हि स्वशुद्धिर्वयमेवात्महितच्छिदाहिताय ।
अघशोकदवद्वयोपशान्त्यै सुलभं हव्यवहामृतं विशेम ॥ ९९ ॥

स्मृत्यां स्वप्रकटनमब्रवीत् पुरोधाः
पूर्वं मे स विषयतामुपैतु सत्यम् ।
हे हंसान्वयभरताधियक्षनाथा
वन्दे वो मुहुरनुमोद्यतां तदित्थम् ॥ १०० ॥

अचरदनुशयानो मानसं यक्षयागं
विपदि सपदि निस्वश्चित्रगुश्चित्रबोधः ।
व्यसनजलधिपारं नेतुकामो नरेन्द्रं
प्लवमिव भरकल्यं द्रष्टुकामो द्विजेन्द्रम् ॥ १०१ ॥

॥ इत्यौपच्छन्दसिकवर्गो दशमः ॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते शुभोदये प्रमादकाण्डः प्रथमः ॥ १ ॥

---

## अथ प्रादुर्भावकाण्डः २

अथाविरासीत्पुरतोऽस्य सुश्रवाः
स चातकस्येव सनीरनीरदः ।
तस्तं शुभक्षेत्रमसौ महत्तम-
स्तीर्थाम्बुसेकी प्रकृतिं समानयत् ॥ १ ॥

शुभः प्रबुद्धः प्रणनाम भूसुरं
तमालिलिङ्गे सुमुदं गतावुभौ ।
आनन्दबाष्पं नयनारविन्दतो
व्यमुञ्चतां गां वदनारविन्दतः ॥ २ ॥

कृतं कृतं नाम गुरो क्षमस्व मे
शमं प्रियाया विरहानलं नय ।
इमामवस्थामगमं प्रसङ्गतो
यज्ज्वालया दग्धसमस्तमङ्गलः ॥ ३ ॥

तां भारतीं ते सुलभां न मन्महे
नूनं नरस्येव सुधां नराधिप ।
स यक्षभर्तुर्भरतोपकल्पितो
भग्नस्त्वया येन बलिः खलेच्छया ॥ ४ ॥
उपर्युपर्येव चरन्नवाप्नुया-
द्यथा न हैरण्यनिधिं जडो जनः ।
सोऽयं जनो यक्षपतिं तथा गुरो
कृपालुनाऽसौ भवतोपदिश्यताम् ॥ ५ ॥
स्वचिन्मयागण्यगुणामृतार्णवं
नारायणं निष्कलमस्य कारणम् ।
ब्रह्माह्वयं प्राहुरुपह्वरप्रियं
वेदान्तिनो यक्षपतिं क्षितीश्वर ॥ ६ ॥
अपाणिपादाक्षयुतो हि निष्कलः
कथं जगन्त्येष सृजेच्चतुर्दश ।
प्रवर्तयेद्वा न हि कुत्रचित्क्वचि-
त्कार्याणि लोके कुणिपङ्गुवीक्षणाः ॥ ७ ॥
अमेययेच्छाह्वययाऽऽत्ममायया
सच्चिन्मयानन्तवपुः स पठ्यते ।
प्रवर्तकः प्राणभृतां च वैभवात्
सर्वं स्वतन्त्रे घटतेऽत्र शोभनम् ॥ ८ ॥
अन्तःपुरान्तः कथितस्त्वया पुरा
सोऽणोरणीयान् बलिकृद्भिरीडितः ।

विश्वेश्वरोऽयं विततोऽधुना घटा-
मुदाहरोदाहरणेन मे समम् ॥ ९ ॥
अणुभ्यः सोऽणीयान् हृदि हृदि महीयांश्च महतो
दवीयान् दूरेभ्योऽप्यतिनिकटवर्ती गगनवत् ।
प्रवक्ष्येऽस्मिन्नर्थे परममितिहासं शुभकरं
शुभेत्यन्योन्यं तावभिदधतुरूचेऽथ स मुनिः ॥ १० ॥

॥ इति जगत्युपजातिवर्गः प्रथमः ॥

---

आसीदवसितलीलो ग्रस्तसमस्तातमसम्भवः पूर्वम् ।
नारायण उपमातुं कविभिः कथितो बतोर्णनाभिरिह ॥ ११ ॥
श्रीस्तनभरपरिरम्भी परपदवेद्ये परो निजनिमेषे ।
निद्रामुद्रावसितः श्रुतिभिरथास्तावि वन्दिभिरिवेन्द्रः ॥ १२ ॥
समजनि स वासुदेवो मायाप्रणयी स्मृतोऽत्र योगीन्द्रैः ।
उर्वारुकमिव वल्लीवलयाद्यो मोचयेन्नरं बन्धात् ॥ १३ ॥
सङ्कर्षणनामाऽभूज्जयया यज्ञायया जगद्यत्र ।
शलभतुलां किल लभते ज्वलन इव ज्वालयोज्ज्वलज्वलिते ॥१४॥
प्रद्युम्नं सुद्युम्नं विद्धि ततोऽनन्तरं कृतिप्रकृतिम् ।
यद्भ्रूविभ्रममात्रात्सनवावरणं भवेत्सुवर्णाण्डम् ॥ १५ ॥
अनिरुद्धोऽप्यनिरुद्धो विश्वस्थितिदोऽथ शान्तिकान्तोऽभूत् ।
पञ्चात्माऽश्रित एवं देवोऽस्यैवञ्च नास्ति पञ्चत्वम् ॥ १६ ॥
प्रकृतिर्विकृतिमवाप्ता पुंसो वीर्याद्गुणेषु विषमेषु ।
असृजज्जगतां बीजं हन्त महान्तं पितामहं महितम् ॥ १७ ॥

अजनि महाहङ्कारः शितिकण्ठोऽकुण्ठवैभवस्तस्मात् ।
अतनुत यस्त्रितनुतया सेन्द्रियवृन्दारकेन्द्रभूतानि ॥ १८ ॥
तत्वानामपटूनां संयुज्य स्वं विधातुमायतनम् ।
रूपैः रूपेषु रतस्तावद्भिः स कृतवानिदं कृपया ॥ १९ ॥
ब्रह्माण्डेऽखण्डमूर्तिर्दशशतसकलाङ्गो महापूरुषः स-
न्ना पातालाद्वितन्वन् सुखचिदवयवान् व्यक्तमासत्यलोकात् ।
जीवाजीवाख्यमेतत्ससुरनरमसौ सासुरं साधु सृष्ट्वा
प्रत्येकं तत्तदाख्यानियतिकृदखिलांस्तानथार्थान् विवेश॥२०॥

॥ इति गीतिकावर्गो द्वितीयः ॥

---

प्राप्तः पाणौ रुचिररुचकः कान्तिकृत्सत्यवृत्तेः
सच्चिन्मूर्तिः कतिपयदिनैर्मेरुशोभो बभूव ।
भूत्वा मत्स्यः स मधुमथनो मुग्धभावस्तिरश्चां
नास्मिंस्तर्को यददिशदसौ वेदगर्भाय वेदान् ॥ २१ ॥
तुङ्गाङ्गं यो जलधिवसनं क्षोभितं देवदैत्यैः
स्वेष्ठे पृष्ठे वहति हि जगन्मण्डलं मन्दरं च ।
कूर्माकारं प्रकृतिविकृतिस्पर्शलेशव्यपेतं
मन्ये मूर्तं धृतिगुणमिमं केवलं केशवस्य ॥ २२ ॥
नासाकाशात्समजनि पुरा वेधसोऽङ्गुष्ठमात्रो
व्याप्ताकाशो गिरिरिव बभौ क्रीडया क्रोड एषः ।
किञ्चेन्द्रारिं कुलिशकठिनं गां तिरस्कर्तुकामं
रम्भास्तम्भं गजपतिरिवापातयद्वीर्यसारः ॥ २३ ॥

प्रादुर्भावा न जनतनुजा भूम्न इत्यत्र दृष्टो
दृष्टान्तोऽयं रिपुसदसि यत्सम्भवः स्तम्भमध्यात् ।
आद्यं माद्यद्दितिजगजविध्वंससिंहं नृसिंहं
यक्षस्यांशं यवनवनसंहारवह्निं भजेथाः ॥ २४ ॥

भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
दाक्षायण्यां समजनि मुनेः कश्यपात्पुत्ररत्नम् ॥ २५ ॥

ब्रह्मादीनां स्तवकृतधियामुत्सवो लोचनाना-
मिन्द्रादीनामसुरभयदं दास्यदात्मीयभागम् ।
सद्यस्तोकं मखमहमुखे क्षिप्रमेधिष्यमाणं
तेजो जातं तदितरदिवाराजतादित्यरण्याः ॥ २६ ॥

तस्याजस्य व्यधित जनको जातकर्माथ चक्रे
नामानाम्नः परममहतो वामनो व्यक्तमित्थम् ।
विश्वव्याप्तं तमुपनयति स्मास्य नो दुर्घटाऽसीत्
सा तद्वृत्तिर्ननु सह सदा वर्तते सद्घटाऽत्र ॥ २७ ॥

दण्डः सोमः समजनि मुनिः कुण्डिकैणाजिनं भू-
श्छत्रं चित्रं स्वरुत मुनयः सप्त दर्भास्तपोऽङ्गम् ।
वागक्षस्रग्विविधकरणच्छद्मनेत्यस्य देवा
भेजुर्मूर्तिं कपटसुवटोर्विक्रमं द्रष्टुकामाः ॥ २८ ॥

उत्फुल्लाभिः परमरुचिभिः साधु कर्णान्तगाभि-
र्देव्यो दृग्भिर्विबुधपतयो धीभिराशीभिरार्याः ।

अन्वीयुस्तं विविधविभवाम्भोधिसीमायमानं
श्रुत्वा यान्तं सुररिपुपतेरश्वमेधं समिद्धम् ॥ २९ ॥
अच्छा नानाद्विजानां वलयविलसिता प्लाव्यमानस्वराणां
पूर्णा कीर्णैः कुशौघैस्त्रिदशसवनवेलोल्लसत्तीर्थकार्या ।
पौरोडाश्या श्रियाऽलं प्रतुलितकमठा नर्मदा धर्मसेतु-
र्दीक्षामासे पुरस्ताद्रथचरणभृता यज्ञवाटी च पश्चात् ॥

॥ इति मन्दाक्रान्तावर्गस्तृतीयः ॥

---

अश्वमेधमहकौतुकवृत्ता विश्वविष्टपसदो नरनार्यः ।
आयमानमिह वामनमेनं प्रेक्ष्य विस्मयवशा इदमूचुः ॥ ३१ ॥
पद्मरागमणिरागवपुश्श्रीः पद्मपत्रनयनो विधुवक्त्रः ।
दभ्रदेहभृददभ्रगुणोऽयं कः कुमार उपयान् सुकुमारः ॥ ३२ ॥
कामकान्तिरपि शीतगुकान्तिः शक्रविक्रमणमुष्णगुतेजः ।
शम्भुवैभवमुमापतिमन्युः सर्वमेकवपुषैति बलिं किम् ॥ ३३ ॥
नो सुरासुरनरोरगरक्षोयक्षजातिषु पुमान् क्वचिदीदृक् ।
नूनमेष निजभृत्यदयालुर्हन्त कूटवटुरेति मुरारिः ॥ ३४ ॥
शङ्करी गुणमयी रजताभा मञ्जु मौञ्जमपि दाम पिशङ्गम् ।
कृष्णकृत्तिरुत दण्ड इतीमे वर्णयन्ति नववर्णिनमेनम् ॥ ३५ ॥
दर्भगर्भकलिताञ्जलि कामं जोषमृग्यजुषमध्ययमधीत्य ।
साम साभिकलिताङ्गुलि गायन् विस्मयं नयति वाग्दयितं च ॥
तर्कितो जनतयेत्थमतर्क्यो यावदेष भगवानुपयातः ।
तावदभ्यगमि सम्भ्रममूढैर्याज्ययाजकविभावसुसभ्यैः ॥ ३७ ॥

अर्पितं भरितया हृदि भक्त्या यज्वना सपदि विस्तृतमास्त ।
काञ्चनासनमुपर्युपरीशो मानसाम्बुजमिवाम्बुजनाभः ॥ ३८ ॥
तस्य चारुचरणाम्बुजयुग्मं क्षालयन् बलिरधाज्जलधाराम् ।
आपवर्गिकमहोदयलाभे साक्षिणीं भगवतैव वितीर्णाम् ॥ ३९ ॥

सभातले कपटवटुर्निषेदिवान्
प्रसेदिवान् बलिविधिना महाबलेः ।
वदान्यमान्यसुरपतिः कुतूहला-
दुवाच तं स च तमुवाच चारुवाक् ॥ ४० ॥

॥ इति स्वागतावर्गश्चतुर्थः ॥

---

को देशस्तव कतमोऽत्र बन्धुवर्गः
का विद्या किमथ वटो चिकीर्षितं ते ।
वाणीयं मम विवशा भवन्तमापत्
कामिन्यो ननु चपलाः क्षमस्व विद्वन् ॥ ४१ ॥
तुल्या नः सकलभुवोऽप्यकिञ्चनत्वा-
न्निस्सङ्गा वयमिति बन्धुता न काचित् ।
आजीव्येत्यभिदधते बुधा न विद्यां
वोढव्यावथ पितरौ कुटुम्बकुण्ठौ ॥ ४२ ॥
गृह्येत त्रिभुवनराज्यमिन्द्रभोज्यं
नेदं चेन्मणिघृणिमान् हिरण्यकोशः ।
क्षेत्रं वा बहुचतुरङ्गिणी चमूर्वा
यद्यत्ते रुचिततमं ददामि तत्तत् ॥ ४३ ॥

आस्माकस्तव विभवस्त्वमेव यत्स्वः
सर्वोऽयं खलु घटतेऽभिमानभाजाम् ।
अस्माभिः स्थितिपदमेव याचनीयं
मानोनैस्त्रिपदमितं हि भूतलं तत् ॥ ४४ ॥
प्राह्लादिप्रिय इह नेक्षतेऽन्यवक्त्रं
कार्पण्यात्सुरतरुमूलभागिवाङ्ग ।
मन्ये त्वां चतुरतरं निजार्थजाल्मं
मा मैवं सुमुख महिष्ठमिच्छ वित्तम् ॥ ४५ ॥
तातोऽदात्स्वकमपि याचितो हितेभ्यो
गण्यास्ते न गुणगणाः पितामहस्य ।
युक्तं ते शतमखशत्रवे तदुक्तं
मा लोको गणयतु मामतुष्टवर्गे ॥ ४६ ॥
इत्येनं गुरुरगदत्ससन्धिसन्धं
मा स्मास्मै छलवटवे दिशः प्रदेशम् ।
श्रीशो यः श्रियमयमाहरत्सुरार्थं
चिक्रंसुर्भुवनमिदं त्रिरेव हीति ॥ ४७ ॥
इज्यो यः क्रतुनिकरैर्भवादृशानां
सोऽयं मे परमपुमानिहापरोक्षः ।
आदत्ते जगदधिपः स्वयं जगच्चेत्
कोऽन्योऽनुग्रह इत इत्युवाच दैत्यः ॥ ४८ ॥
आकल्पस्फुरितमणीन्द्ररश्मिमिश्रा-
द्भृङ्गारात् कनकशुभान्मुखाच्च तुल्यम् ।

गोराज्या सुविशदवर्णया गलन्त्या
भूम्नेऽसौ त्रिपदमितां भुवं दिदेश ॥ ४९ ॥
सम्राजोत्प्रैक्षि मेरुः पदकटकमणिः काञ्चिकान्तिर्ग्रहालि-
र्मुक्तामध्येऽधिवक्षस्तरलमणिरहो रत्नदीपो द्युलोकः ।
ग्रीवारत्नं च सत्यं रुचिररुचिचणोष्णीषमूर्धाऽण्डखण्डं
पृश्नेस्तस्यैव सद्यस्त्रिपदमितमहारोदसो विश्वमूर्तेः ॥ ५० ॥

॥ इति प्रहर्षणीवर्गः पंचमः ॥

---

ससृजेऽर्चयता पादं विधिना विधिना विभोः ।
उदपात्राच्च वक्त्राच्च सुरसेव्या सरस्वती ॥ ५१ ॥
नारायण रमानाथ देवा(द)द्वर गिरः पितः ।
सुरा गुणसमास्तेऽथ नैवासुरनरः कुतः ॥ गोमूत्रिकाबन्धः ॥ ५२ ॥
सनन्दनः ससनकः सनातन सनातनः ।
अहं हराद्या लेखाश्च न ज्ञातारः कृतेर्हि ते ॥ निरोष्ठ्यम् ॥ ५३ ॥
मानये मनसाऽसारविभाता शिवदारप ।
वामनामितगो त्वा हि रसा ते परमाक्षर ॥ ५४ ॥
रक्ष मारपते सार हित्वा गोतमिनाम वा ।
परदा वशिताऽभावि रसा साऽनम येन मा ॥
प्रतिलोमानुलोमश्लोकौ ॥ ५४ ॥ ॥ ५५ ॥
सारामा परमा रम्या सरामा परमारदा ।
दारमाप रमा यत्ते याऽऽरमा परमायया ॥ मुरजबन्धः ॥ ५६ ॥

परम प्रणमद्भक्तप्रवरप्रणयक्षर ।
अव नस्तवनऽव्यक्त स्तवनक्षयदस्य ह ॥ एकाच्छ्लोकः ॥ ५७ ॥
जीवाजीवेषु लोकेषु राजते राजराज ते ।
देवाय वासुदेवाय नमो नानाविलासिने ॥ असंयोगाक्षरम् ॥ ५८ ॥
भूया भावाय भजतां यातानामच्छलानज ।
भानात्तत्वमतेर्लाभवामत्वमतिमच्छय ॥ अर्धभ्रमकम् ॥ ५९ ॥
स्याद्विष्णो द्राग्जिष्णुर्जिष्णुर्जिष्णोश्शत्रुर्न स्याज्जिष्णुः ।
त्वद्भक्तत्वात्सद्भर्ताऽर्थिन्यास्सत्यश्र्यं श्रीष्ट श्रैष्ठ्यम् ॥
॥ संयोगाक्षरम् ॥ ६० ॥

॥ इति पथ्यावक्त्रवर्गः षष्ठः ॥

---

विभवोऽस्य हि विश्वस्य विश्वस्य वरदोरस ।
वरदोरसमानस्य मानस्य विभवोऽस्य हि ॥ कांचीयमकम् ॥ ६१ ॥
लीलालोल ललल्लीलालीलालेलालिलालिलाः ।
पापपापापपापोपापापीपापपाप्पप ॥ अर्धैकाक्षरम् ॥ ६२ ॥
भवतश्चरणे भूयान्मन्मनो योऽजितो वने ।
भवतश्च रणे भूयान्मन्मनो योजितोऽवने ॥ समुद्गयमकम् ॥ ६३ ॥
विश्रुता भुवि सावासा देवादे विद्यते द्यवि ।
तनुता नुत सारासा तेजस्ते सरतोरस ॥
सरतोरस तेजस्ते सारासा तनुता नुत ।
विद्यते द्यवि देवादे सावासा विश्रुता भुवि ॥
॥ प्रतिलोमानुलोमैकार्थश्लोकौ ॥ ६४ ॥

तातेतेतीततातत्त्वाततत्तुत्ततितोतता ।
ततातोत्ताततितोत्तेवितत्तोतीतेतितातते ॥ एकाक्षरम् ॥ ६५ ॥
नुन्नेतितान्नितान्तन्ते तन्तुनान्नो ननून्नता ।
नानानुतीनान्तान्तानान्ततनुते तनु ते तनूः ॥ द्व्यक्षरम् ॥ ६६ ॥
वरा समा माऽऽस रावराजिता न नताजिरा ।
सताऽनया या नता समानया ततयाऽऽनमा ॥ सर्वतोभद्रकम् ॥ ६७ ॥
परमानन्दमय ते प्राकृती नेयमाकृतिः ।
परमानन्दमयते नमस्ते विश्वरूपिणे ॥ ६८ ॥
नानानुन्नानिनेन्नेन्ने (ग)गेगेगागे गगो गगौ ।
किं काके केकिकाके किं रुरोरीरोरुरोररेः ॥ पादैकाक्षरम् ॥ ६९ ॥
त्रिस्थानाततशुद्धचिच्छुभतनो भूयः स्वशोणश्रिया
भित्त्वाऽराजि विभो तवाण्डभवनं श्रीलोकनाथाक्रमे ।
चित्रं यस्तु वदन्नरिं निभवद्दुः कामस्य दिव्यं हि ते
तेजः पात्रिति शोभि नो रुचितमायासेन मे दृश्यते ॥ ७० ॥

॥ इति युग्मविपुलावर्गः सप्तमः ॥

---

इति नुततनवे जगन्ति दत्त्वा
मधुमथनाय परं पदं स लेभे ।
न भवतु तव विस्मयोऽत्र भक्त्या
वनकुसुमाङ्कुरदो विमुच्यते हि ॥ ७१ ॥
धरणिधरकुलं त्रिसप्तवारं
धरणिधरो धरणीभरापहारी ।

अहरदहह वीरशेखरोऽसौ
नडनिकरं द्विरदीव जामदग्न्यः ॥ ७२ ॥
नगमृगनरवानरादिविश्वं
निजपदमेव निनाय यो मुमुक्षुम् ।
भुवनभयभरघ्नमङ्ग रामं
भज भज तं करुणामृताब्धिमेनम् ॥ ७३ ॥
रिपुसदसि रणाजिरे वधूना-
मपि वलये हृदये च योगभाजाम् ।
पशुपतिशिशुमात्तविश्वरूपं
स्मर नृप विस्मर मा स्मरस्य तातम् ॥ ७४ ॥
सुमतममृततुल्यमासुरेभ्यः
स्मितललिताऽऽदित वाणिनीव वाणी ।
अदिशदपि सुरोत्कराय यः स्वं
प्रदिशतु ते शुभ बुद्धिमेष बुद्धः ॥ ७५ ॥
कलिमलकलिलं जगत् स्ववासात्
कतकफलं कमिव प्रसादयेद्यः ।
खलकुलवनवह्निरेष कल्की
रिपुविपदे तव सम्पदे च भूयात् ॥ ७६ ॥
मुनिघननिकरो यतो गृहीत्वा
बहु भुवि वर्षति वेदजीवनीयम् ।
यमथ विशति विश्वमेव साक्षा-
दुपसर सात्यवतेयसागरं तम् ॥ ७७ ॥

निजकमलमपास्य यद्भजेता-
मपि कमला कमलासनो रसेन ।
भुवनसुरभि कार्दमं विनिद्रं
कपिलवपुःकमलं मनोलिरेतु ॥ ७८ ॥

मुकुर इव विभाति यस्य शुभ्रे
वचसि विभासिनि रम्यमात्मरूपम् ।
नतमिह यदुहैहयादिभूपै-
स्त्वमपि नमस्कुरु दत्तमत्रिसूनुम् ॥ ७९ ॥

यो गीयते परमहंसमये सदैवं
राजन्न चान्तरतमा भवते जितस्वः ।
योगीयते परमहं समये स दैवं
राजन्न चान्तरतमा भव ते जितस्वः ॥
॥ पूर्वोत्तरार्धयोस्समम् ॥ ८० ॥

॥ इति पुष्पिताग्रावर्गोऽष्टमः ॥

---

दावे ततं दावमिवोग्रजिह्वया
संहृत्य यातुप्रकरं प्रपालितः ।
स्वायम्भुवो येन मनुर्मनुष्व भो-
स्तं यज्ञसंज्ञं रुचिरं रुचेस्सुतम् ॥ ८१ ॥

दृष्टो नरैर्वेदशिरःप्रकाशितो
वर्णी रमेशस्तुषिताशिशुर्विभुः ।
विप्रायुतान्येष युतान्यशिक्षयत्
सत्यं विरुद्धोऽप्यनुकूल एव नः ॥ ८२ ॥

धर्मादसौ सूनृतया सुभाषया
सत्यव्रतैराविरभाव्यतान्वितः ।
भूतानुकारिः खलु सत्यसेन इ-
त्येवं गुणैरेभिरिहापि दृश्यते ॥ ८३ ॥

मत्तं प्रमत्तं प्रमदासखं सदा
हिंस्राच्च हस्तीन्द्रमहो अमूमुचत् ।
ग्राहाद्धरिः कीर्तित एव तापसः
स त्वां च रक्षेत्कृपयैवं तादृशम् ॥ ८४ ॥

स्वानन्ददं सुन्दरमिन्दिरार्थितं
वैकुण्ठमुत्कण्ठितयोगिमण्डलम् ।
मुक्ताश्रयं शुभ्रसुखं च तत्कृतं
लोकं च लोकैककुतूहलं स्मर ॥ ८५ ॥

कर्पूरगौरं गहनं पयोनिधिं
तत्कीर्तिकल्पं प्रविलोड्य लेभिरे ।
यस्य प्रसादादमृतं यथाऽमृतं
देवाः स देवोऽत्र विराजतेऽजितः ॥ ८६ ॥

दाक्षायणीकश्यपयोर्द्विजन्मनो-
र्नो केवलं सूनुरसौ तपस्विनोः ।
प्राक् पृश्निगर्भोऽपि बभूव भूतयः
सेवासमाः कल्पतरोरिवेश्वरात् ॥ ८७ ॥

दत्ता मया भूरिति संस्तरे (हरेः) बलेः
सा वेदगुह्याभिमता सरस्वती ।

स्त्रीव्याजतस्ते जननी हरन् हरे
यस्सार्वभौमो बलये दिशेद्दिवम् ॥ ८८ ॥
आयुष्मतो वल्लभयाऽम्बुधारया
प्रादुष्कृतेनाप्यृषभेण विष्णुना ।
भोक्ताऽद्भुतो भोगगणान् पुरे वसन्
प्राणी यथा प्राणवरेण केवलम् ॥ ८९ ॥
आविर्भावी शारदाशान्तचारी
विष्वक्सेनो विश्वसृग्वेश्मनीशः ।
कान्तः शान्तः शीतलांशुप्रकाशो
नेतोभामं शम्भुमम्भोधिदेश्यम् ॥ ९० ॥

॥ इति इन्द्रवंशावर्गो नवमः ॥

---

आर्योत्तमादार्यकनामधेयात्
प्रादुर्भवन् वैधृतया धृतो(यत्)ऽयम् ।
नो नामतः केवलमर्थतोऽपि
यो धर्मसेतुर्भुवनैकहेतुः ॥ ९१ ॥
दुर्दर्शदुस्पर्शजडेष्वयुक्ते-
ष्वर्कानलेन्दुष्वपि धामवत्सु ।
यस्योपमा(र्थे)र्थो भविता न लोके
भूम्ने सुधाम्नेऽस्तु नमस्त्रिधाम्ने ॥ ९२ ॥
ये नाशिना नित्यमवाप्तुकामा
दुःखेन सौख्यं स्वयमन्यकेन ।

....................................

तैः पूज्यपादो भविता पटिष्ठैः ॥ ९३ ॥

योगेश्वरोऽसौ तनयो बृहत्याः

................स हि जन्महीनः ।

नैष्कर्म्यतुष्टोऽप्युरुकर्मकाण्डं

कर्तुं बृहद्भानुरहो महेशः ॥ ९४ ॥

हंसच्छलेनापतितं वलक्षं

तत्वावबोधं मधुसूदनांशम् ।

दृष्ट्वाऽऽप तुष्टिं ससुतो विधाता

तत्वं विवित्सुस्तमसीव दीपम् ॥ ९५ ॥

यामाह विद्यां स हरिः स्वयम्भू-

र्नाम्ना कुमारः सुकुमारमूर्तिः ।

तां तुल्यमावर्तयितुं महिष्ठां

नूनं विधिः प्राप चतुर्मुखत्वम् ॥ ९६ ॥

लोकैकहेतुर्मनुवंशकेतु-

र्जातं पुरस्तादृषभं तमाहुः ।

क्ष्मारक्षिणो यज्ञविधिज्ञवन्द्या

वैदान्तिका यस्य गुणाः सुताश्च ॥ ९७ ॥

ब्रह्माननेभ्योऽप्यपहृत्य वेदान्

बिभ्रन्मदं योऽत्र तिरश्चकार ।

व्यक्तं मधुत्वं दधतं खलं तं

हत्वा हयास्यः श्रुतिमाजहार ॥ ९८ ॥

धान्वन्तरं गौरमरीचिगौरं
सारस्वतं सारमितं सुरेन्द्रैः ।
रूपामृतं रत्नघटामृतं च
मुक्त्यै च भुक्त्यै च भजन्ति सन्तः ॥ ९९ ॥
ससुधानसुरान् समया स मयाऽ
समया समयादजिताङ्गरुचा ।
अमृतं च ददावनिता वनिता
वनितावनिताप्यसुरेन्द्रघटा ॥ १०० ॥

॥ इति इन्द्रवज्रावर्गो दशमः ॥

---

चिरं विधाय प्रभुरेतरेयो
गिरं सवित्र्या प्रतिसूत्रितेऽर्थे ।
अनर्तयद्भावरसाभिरामां
रमाविरिञ्चादिविदग्धमध्ये ॥ १०१ ॥
स्मरं ससेनं स्मितवान् विजित्य
जयश्रियं द्यां गमयाम्बभूव ।
य उर्वशीव्याजत उर्वरक्तो
विभाति नारायण एष धार्मः ॥ १०२ ॥
लयानिलास्फालितपद्मसद्म-
प्रभङ्गभीताजभयघ्ननामा ।
हरिर्हरिष्यत्यपि ते महार्तिं
सङ्कीर्तितो धर्मसुतः सुकर्मा ॥ १०३ ॥

जगत्यपार्थः परिपूर्णकामो
न कृष्णबन्धुः स्वयमेव कृष्णः ।
परोपरोधान्न वनाश्रयः सन्
परोऽपरोऽजायत धर्मपुत्रः ॥ १०४ ॥
शिवां शिवात्तोषिततो गृहीत्वा
विधावताऽण्डेन विदग्धकान्ताः ।
अवैक्षि देवस्तदपेक्षयाऽयं
क्रमादमुञ्चत्सुतनुं तनूं च ॥ १०५ ॥
नृपाङ्ककामाय कलाक्षराय
ध्रुवाय खिन्नाय वनं गताय ।
जगत्त्रयात्सोन्नति वासुदेवः
पदं ददौ पश्य दयां निजेषु ॥ १०६ ॥
अनूत्प्लुतं वत्सकमात्तराव-
मुपाह्वयन्ती प्रतिहुङ्कृतेन ।
पपौ हरिः कूपरसायनं गौ-
र्भवन् भवार्थं त्रिपुरासुराणाम् ॥ १०७ ॥
गवां गणा यं तरसाऽनुविष्टा
यतश्च निर्यान्ति विचित्रवर्णाः ।
स गोपतिस्सन् भगवानिवान्यो
हरिः श्रितश्रीर्बडबामुखोऽयम् ॥ १०८ ॥
स शिंशुमारादिवपुः पुनश्च
शताष्टनारायणमुख्यरूपः ।

विभाति विश्वादिसहस्रदेहो
न गण्यतेऽसावजितादिमूर्तिः ॥ १०९ ॥

विरिञ्चाहीन्द्रेन्द्रा दशशतमनोवक्त्रनयना
न मन्तुं वक्तुं वा दधति पटुतां द्रष्टुमथ किम् ।
गुणांशान् कर्मांशानथ च वपुरंशाननुपमा-
नहो यक्षस्यान्ये किमुत किमुतैव त्वहमिति ॥ ११० ॥

॥ इति उपेन्द्रवज्रावर्ग एकादशः ॥

---

उवाच वाचमुन्मनाः शुभः शुभस्थिरो द्विजम् ।
अधोक्षजस्य यक्षता कथं सुरप्रभोरिति ॥ १११ ॥
पुरोधसा पुरोच्यते पुरा पुराणपूरुषः ।
सुरान्तरोऽसुराधिपं जिगाय फेनवज्रवत् ॥ ११२ ॥
श्रियाऽतिभासुराः सुरा जयं स्वमेव मेनिरे ।
न दैवमस्मरन्मदप्रमादकारणं श्रियः ॥ ११३ ॥
विधित्सुरुर्वनुग्रहं विधातुमेष विग्रहम् ।
बभार यक्षविग्रहं जयन् रुचा रविग्रहम् ॥ ११४ ॥
महो महोल्मुका इव स्थिरं च बिभ्रतोऽमराः ।
निमज्ज्य यक्षवारिधौ क्षणेन निस्त्विषोऽभवन् ॥ ११५ ॥
पुरन्दरो दरोज्झितो निरीक्ष्य देवदीनताम् ।
बुभुत्सुराद्रवत्परं महार्चिषं पतङ्गवत् ॥ ११६ ॥
अपेत्य तं तिरोहितं स इन्द्र इन्द्रजालवत् ।
विषादवारिधौ भ्रमन् शिवां तरीमिवैक्षत ॥ ११७ ॥

पुरा पुरार्धतामहो स्मरद्रुहोऽपि या ययौ ।
तदङ्गकान्तिविभ्रमान् कविः क एव वर्णयेत् ॥ ११८ ॥
पदे प्रणम्य सम्पदे स दीनमन्वयुक्त ताम् ।
किमम्ब यक्षलक्षणं विलक्षणोष्ठवस्त्विति ॥ ११९ ॥
श्रोत्रं न श्रोत्रप्यवक्त्रङ्ग वक्त्रं
चित्तं नो वेत्त्रीक्षकं नाक्षि यस्य ।
वेद्यं वेदैर्वेदयद्ब्रह्म सर्वं
यक्षं वत्सावेहि लक्ष्मीपतिं तम् ॥ १२० ॥
इति दशशतनेत्रो बोधितः प्राप बोधं
सपदि हरपदस्थां विभ्रदेकां दशं सः ।
धरणिधर भवेच्चेल्लक्षमेकं दशां ते
त्वमपि परमबोधं प्राप्नुया व्यक्तमित्थम् ॥ १२१ ॥

॥ इति प्रमाणिकावर्गो द्वादशः ॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते शुभोदये प्रादुर्भावकाण्डो द्वितीयः ॥ २ ॥

---

अथ गोविन्दकाण्डः ३

रोमोद्गमोऽङ्गे प्रमदाश्रु नेत्रे
चित्तेऽञ्जनाभोऽञ्जलिरात्ममूर्ध्नि ।
वक्त्रे विकासोऽथ सरस्वती च
रराज राज्ञो रसनाग्ररङ्गे ॥ १ ॥
आभ्यन्तरध्वान्तमरीचिमालां
सल्लोललोलम्बसरोजमालाम् ।

स्वामिन् स्वचिन्तामणिमञ्जुमालां
तनुष्व गोविन्दविलासमालाम् ॥ २ ॥

विष्णोः पदस्थेन रुतेऽमुनेति
धाराधरेणेव धराधरेण ।
वाणीं द्विजेन्द्रोऽथ हरेः पदान्तं
निरीक्षमाणो मधुरां ससर्ज ॥ ३ ॥

वृन्देन वृन्दारकपुङ्गवाना-
मभ्यर्थितोऽभ्यर्थितदो मुकुन्दः ।
शूरात्मजाद्देवकपुत्रिकायां
मताविव प्रादुरभून्मुनीन्द्रात् ॥ ४ ॥

विद्वान्सुतं विश्वपतिं स शौरि-
र्मोहात्तु तं गोकुलमानिनाय ।
सद्यो व्रजन्ती निजबान्धवानां
महेशमायोपकृतिं व्यधात्ताम् ॥ ५ ॥

अस्त्री न भीरुर्न किलाबला या
तां पूतनां पातितवान्यदेषः ।
न स्त्रीवधादीनवदीनमस्मा-
द्यशो यशोदाशिशुराप शुभ्रम् ॥ ६ ॥

(कान्तस्य पाणिग्रहणप्रसङ्गे)
क्षिप्तं त्वया नो विविधार्थजातम् ।

---

[1] आदीनवः । 'आदीनवास्रवौ क्लेशे' इत्यमरः ॥

शिष्टोऽसि लाभोऽयमुरुर्बतेति
त्रय्या लयासौ शरणे किशोर्या
शिशुः शयानो मधुरं जगेऽसौ ॥ ७ ॥
लीलोत्सवे रिङ्खणसम्भ्रमे च
क्रोधोद्गमेऽप्यात्मनि लोठकोऽलम् ।
सर्वाङ्गसङ्गैः कृतमङ्गला भू-
श्चिराय रम्यं चकमेऽस्य बाल्यम् ॥ ८ ॥
मृत्सां किमत्सीत्यवगूर्णयष्टे-
र्मातुर्यदादत्त भयं सरोदम् ।
वात्यासुरारिर्विवृते मुखाब्जे
जगत्प्रदर्श्याशु ददौ स तस्यै ॥ ९ ॥
वत्सानां नो विमोक्षं वितरति तरसा तस्करोऽन्तः प्रविष्टो
भुङ्क्ते कृष्णोऽर्थसार्थं सखिशिशुसहितो दृश्यते चेत्कथञ्चित् ।
कान्तं कान्तालकान्तं प्रकटयति शनैर्हासि बिम्बोष्ठमास्यं
सद्यो दृश्यत्वमेतीत्यभिदधुरजितं गोपिका वैदिकाश्च ॥ १० ॥

॥ इति अन्त्यपादोपेन्द्रवज्रावर्गः प्रथमः ॥

---

नाथोऽर्जुनावर्जुननाममैत्र्या-
न्नूनं निपात्यापि दिवं निनाय ।
अपार्थवृक्षोऽपरथा विषोग्रः
कस्मात्प्रभग्नो नरकं प्रणीतः ॥ ११ ॥
वत्सोक्षसप्तोक्षवयोहयेभान्
दैत्यान्निहत्यासदसावधस्तात् ।

तथापि कीर्तिर्व्यचरत्त्रिलोक्या-
मारुह्य तानेव हरेः कथं नु ॥ १२ ॥

कृत्वोच्चकैः कालियमूर्ध्नि नृत्तं
पीत्वा विशन्नन्दवनानलौघम् ।
मुदं दधे गोपवधूकिशोरो
लीलातपत्रोचितगोत्रधारी ॥ १३ ॥

कांश्चित्प्रपन्नान् प्रतिलालयन्त-
मन्यानुपानूपमुपाह्वयन्तम् ।
गवां गणान् कांश्चिदुपाह्वयन्तं
विप्रप्रियाः श्रीप्रियमार्चिचंस्तम् ॥ १४ ॥

स व्योमवाय्वग्निमनुष्यधर्म-
प्रेष्योग्रकालाहिभयापनोदी ।
वयस्यताताखिलगोवधूः स्वं
लोकं तदाऽऽलोचयतापि पश्चात् ॥ १५ ॥

कान्तस्य पाणिग्रहणप्रसङ्गे
श्रीवेणुयष्टेः सहसाऽविशत्ताम् ।
मधुद्विषः सा मधुराधरं च
लेभे विदग्धा मुहुराश्रितैनाम् ॥ १६ ॥

गोविन्दवेणोः स रुतैर्विरेजे
संनिर्वृता चित्रसमा त्रिलोकी ।
वयो ययुर्मौनमुदग्रकर्णा
ग्रस्ताग्रशष्पाः पशवो द्विवर्गाः ॥ १७ ॥

गोपाङ्गना नाथ सुदर्शनेन
त्वं पाहि पाहीति ययुर्मुकुन्दम् ।
वियोगिनीनां कुचकुम्भशत्रोः
पञ्चेषुपञ्चाननतोऽतिभीताः ॥ १८ ॥
लीलावलोकोत्सवमन्दहास-
श्रीचारुचाटुः परिरम्भभङ्ग्याम् ।
रमाभिरामो रमयाम्बभूव
रामानुजस्ता रमणीयरामाः ॥ १९ ॥
कृष्णौ कृष्णौ वधूर्भान्त्यरुणमणितनूरन्तरेणाप रासं
वध्वौ वध्वौ च कृष्णो मरतकमणिभाः संसितान्योन्यहस्तम् ।
अन्यत्तद्रत्नमालावलयमविरतं शिञ्जिनीमञ्जुनृत्तं
मध्येगायन्मधुद्विट्तरलमलमभूद्भूषणं भूमिभीरोः ॥ २० ॥

॥ इति तृतीयपादोपेन्द्रवज्रावर्गो द्वितीयः ॥

---

मग्नं महाभक्तिसुधासमुद्रे कदाचिदानीतमिहास्य वीच्या ।
अभ्यागताभ्यर्चनयाऽभिनन्दन्नक्रूरमक्रूरसुहृज्जगाद ॥ २१ ॥
कच्चित्सखे नौ पितरौ सुखं स्तो न पीड्यमानौ पुरि भोजराजा ।
अप्यावयोस्तौ विरहाग्निमुग्रं ज्ञानामृतेनैव शमं नयेताम् ॥ २२ ॥
कच्चिद्रमन्तेऽन्धकवृष्णिभोजाः पुरे सदारा यदवोऽपरेऽपि ।
आहोस्विदेतान्विहिनस्ति कंसो धर्मानिवाधर्मरतोऽतिकामः॥२३॥
पृष्टस्तथा विष्टपधारिणाऽसावुवाच किं विश्वविदेऽत्र वेद्यम् ।
एवञ्च किञ्चिद्वचनेन सेवे त्वां दीपदीप्त्येव जगत्प्रदीपम् ॥ २४ ॥

देवर्षिवाक्येन स वासुदेवं विवेद कंसः स्वरिपुं भवन्तम् ।
धीरस्य धीरस्य लयाय वैरं धत्तेऽधुना कर्कटकीव गर्भम् ॥ २५ ॥
अग्राहि तातस्तव हन्त हन्तुं मृगारिणा गौरिव निर्घृणेन ।
दीनः स्मरंस्ते स्मितमास्यचन्द्रं मुक्तः कथञ्चिन्मुनिवारितेन ॥
दूये दयालो पितरौ स्मरंस्ते सदा सबाष्पौ निगडे निरुद्धौ ।
द्यावापृथिव्योरभयाय जातो याभ्यां त्वमाभ्यामभयं दिशाग्रे ॥
स्वा बन्धुता दैवधिया दुधाव स शल्यकेन्द्रः शल्लीरिवोच्चैः ।
आशा विशाला द्विविधा भजन्ति नामानि ते नाथ वदन्त्य एताः ॥
सङ्क्रन्दनो वायुसखो जलेशो मनुष्यधर्मा शमनादयोऽन्ये ।
तद्विक्रमातिक्रमतस्त्रसन्तो नामानि नीचार्थतया वहन्ति ॥ २९ ॥

कीर्तिश्रीः स्फुरतु मुकुन्द कुन्दगौरी
मन्दाक्षं त्यजतु विलासभासिता ते ।
आक्रम्य स्वरिपुशिरः क्रमाद्धतोच्चैः
संनृत्येत्सदसि सदस्यहो दिवीति ॥ ३० ॥

॥ इति द्वितीयपादोपेन्द्रवज्रावर्गस्तृतीयः ॥

---

निशम्य शौरेरिति भावगर्भं
वक्त्रात् स्मितं सूत्रमिवाविरासीत् ।
क्रोधारुणाक्षाद्भ्रुकुटीकठोरा-
द्रामाननाद्भाष्यमिवाट्टहासः ॥ ३१ ॥
नियच्छतः स्वच्छतराक्षताक्ष्यान्
पद्मापतिर्दानपतेः सरामः ।

भानौ प्रभाते विमलं विशालं
यानं च चित्तं च समारुरोह ॥ ३२ ॥
व्रजन्व्रजस्त्रीनयनैः स नेहे
नीलोत्पलाभैर्निगडैरिवाङ्घ्रौ ।
आलोकनीलोत्पलहासहारान्
दत्त्वा यथेष्टं मुमुचे कथञ्चित् ॥ ३३ ॥
अनाथिनीं नाथ न मां त्यजेत्थ-
माक्रन्ददीनां करुणैर्विरावैः ।
कृष्णां स कृष्णोऽभजदन्यमूर्त्या
सम्प्रैक्षि यत्रा कथमन्यथाऽत्र ॥ ३४ ॥
प्ररोचयन्तं विषयाननेकान्
कैश्चिद्धृतार्घ्यं परमादरेण ।
निन्ये रथस्तूर्णमथोपकण्ठं
शौरिं नगर्या रविमम्बुराशेः ॥ ३५ ॥
विवेश देवो मधुरां मधुद्वि-
डक्रूरयानं शनकैर्विहाय ।
संरम्भदीप्तेन बलेन युक्त-
स्तस्मिन् प्रसङ्गे जघटे तदेव ॥ ३६ ॥
पुरं पुराणः पुरुषोऽभ्यपश्य-
द्रम्यं नवद्वारकृताभिरक्षम् ।
तुङ्गोत्तमाङ्गायितसौधशृङ्गं
स प्राणभाजामिव यादवानाम् ॥ ३७ ॥

स दृष्टवांस्तोरणपार्श्वराज-
दूर्ध्वध्वजव्याजभुजद्वयस्य ।
लोलत्पताकाञ्जलिबद्धमानं
वाद्यस्वनस्तोत्रसमेतमत्र ॥ ३८ ॥

सभातलं प्रेक्ष्य स भासमानं
मध्येपुरं भक्तमनोमनोज्ञम् ।
भ्राजन्मणिस्तम्भगणावभात-
स्वाकारकान्तं प्रभुरभ्यनन्दत् ॥ ३९ ॥

अन्वायातौ क्षितिपतिपथे वल्लवैरुल्ललद्भि-
र्लीलालोलौ कलभललितौ जग्मतुः कृष्णरामौ ।
पर्यैत् पुर्यां गुणगणमयी तत्कथा जालिकावत्
पौराः सर्वे सपदि ददृशुस्ते तया कृष्यमाणाः ॥ ४० ॥

॥ इति प्रथमपादोपेन्द्रवज्रावर्गश्चतुर्थः ॥

---

नयस्य वेत्त्रा विषयीकृतं तं
श्वफल्कपुत्रेण यथा प्रवक्ता ।
पुरा परात्मानमिमं निलीनं
प्रापुस्त्रियस्त्र्यय्य इवेक्षितुं द्राक् ॥ ४१ ॥

निवृत्तिमेता युगपद्व्रजन्त्यो
गृहे प्रवृत्तिं प्रकृतां विहाय ।
न हन्त कान्तात्मजसद्मचिन्ता-
माकृष्यमाणाश्च दधुः कदाचित् ॥ ४२ ॥

तासां द्रुतानां मणिमेखलानां
पदे पदे शिञ्जितशिञ्जिनीनाम् ।
निगूह्यमानं च सकङ्कणानां
कोलाहलः सम्भ्रममभ्यधत्त ॥ ४३ ॥
सखीषु यातासु जवाद्भुजेऽधात्
स्वकुण्डलं कङ्कणमाशु कर्णे ।
वधूः परा हारमधत्त काचित्
पादे गले काञ्चनरत्नकाञ्चीम् ॥ ४४ ॥
विनोत्तरीयस्तनपट्टिकाभ्यां
गताऽङ्गनाऽन्या सहसा विनिद्रा ।
स्मितेन सख्या विदुषी सलज्जा
सद्योऽपुरस्तात्स्थितिरैक्षतैनम् ॥ ४५ ॥
निरस्य रौग्मं वलयं सवेगं
महामणिश्रीकटकभ्रमेण ।
बभार शाबं सुमुखी न हास्या
कृष्णं गते चेतसि किं करोतु ॥ ४६ ॥
कृतैकनेत्राञ्जनमेवमन्यत्
प्रसाधनं सामि विधाय यान्त्यः ।
बभुः पराभ्योऽधिकमेव भूषा
भक्तिः परा (सं) सा भ्रमसञ्चिताऽऽसाम् ॥४७॥
नितम्बबिम्बैर्निबिडैर्बभासे
स्तनेभकुम्भैश्च परस्परेण ।

सुमध्यमानां पथि मध्यमास्य-
पादारविन्दैस्तनुभिर्न जातु ॥ ४८ ॥
मुकुन्दसौन्दर्यसुधाऽक्षिपीता
तदन्तरापूर्य बहिर्जगाल ।
स्मितोदयोल्लासविकासभाव-
व्याजेन वक्त्राङ्गविलोचनेषु ॥ ४९ ॥
आलोकादपि केवलात् किल गताः सर्वेन्द्रियानन्दनं
सद्यो दक्षकटाक्षहासललितैः कृष्णस्य कामातुराः ।
ब्रह्म ब्रह्मसुवेदितं हरिरयं हन्तेति चिन्ताचिता-
स्तां संयोगवियोगयोगगुणितां तुल्यं सुदत्यो दधुः ॥५०॥

॥ इति चतुर्थपादेन्द्रवज्रावर्गः पंचमः ॥

---

महेशयोस्तत्र महीशमार्गे
परस्परं संवलिता विभाऽभात् ।
गङ्गौष्णगण्योरिव वारिधारा
सतां महांहो भजतां हरन्ती ॥ ५१ ॥
पुरैव निर्णेजननिर्मलानि
निहत्य निर्णेजकमुग्रदर्पम् ।
वीर्यश्रियाऽत्युल्लसितानि शौरिः
समं वयस्यैर्वसनान्यधत्त ॥ ५२ ॥
अलक्तकाक्तैश्च निसर्गरक्तैः
पदैर्नखाद्यै रहिते विशेषे ।

व्यर्थं न मेने निजकर्म कृष्णे
परान्वरान्नापित आप्य तस्मात् ॥ ५३ ॥
परार्चनेन स्फुटमात्मनः श्रीः
श्रियेव बैम्ब्या प्रतिबिम्बलक्ष्मीः ।
मालाकृदस्याप हि सौख्यमालां
जनोऽनुरागं विहितानुरागा ॥ ५४ ॥
हरिः सलीलं हरिनीलनीलः
समेत्य शृङ्गारितमङ्गलाङ्गः ।
हस्तेन हस्तीन्द्र इवेक्षुदण्डं
नृपस्य कोदण्डमखण्डयत्सः ॥ ५५ ॥
उवाच भङ्गं धनुषो विरावो
जगत्त्रये दूतवचो वृथाऽऽसीत् ।
स्वेदप्रकम्पौ नृपतेरभूतां
भयान्नु कोपान्नु समुच्चयान्नु ॥ ५६ ॥
प्रपालितं वीरवरैरनेकै-
र्जयश्रिये पूजितमीशधार्यम् ।
चापं च चक्रं च निशम्य कंस-
स्ततांम गोविन्दबलावलूनम् ॥ ५७ ॥
दरः सचिन्तोऽस्तिपतिं विवेश
सभक्तिरुच्चैः सुजनं प्रमोदः ।
नन्दस्थलं नन्दसुतः सकीर्तिः
सहस्ररोचिश्च सरोचिरब्धिम् ॥ ५८ ॥

प्रणम्य चाणूरपुरस्सरेषु
पुरस्थितेषु प्रणतः प्रतापी ।
मल्लेषु लक्षत्सु किलाचचक्षे
विषादिनं भोजपतिं निषादी ॥ ५९ ॥

दभ्रैर्भ्रूविभ्रमैस्ते ययुरमृतभुजः कान्दिशीका निदेश्या
गोपीस्तन्याश्युदन्यः किमपि भयकरः कोऽपि मायाविपोतः ।
त्वज्ञामेयात्त्वमेनांस्तव भटकटकान् पालयेः कालकल्पा-
द्राजन् वर्मेव वाज्ञं किमिह बहुगिरा कार्यशेषे नियुङ्क्ष्व ॥

॥ इति तृतीयपादेन्द्रवज्रावर्गः षष्ठः ॥

---

निशम्य मल्लैरनुमन्यमानं
साधिष्ठमम्बष्ठवचोऽपि दभ्रम् ।
नृपः प्रयातः प्रकृतिं भुजौ स्वौ
निरीक्ष्य रूक्षो न्यगदत्सहासम् ॥ ६१ ॥

इदं भवन्तः शृणुतात्मतत्वं
नो गोप्यमप्यल्पमुपासकेषु ।
अवेत्य योगी समदृक् समस्तं
रहस्यहो नारद इत्यवोचत् ॥ ६२ ॥

न मर्त्यमात्रं स्वमवेहि राजन्
जातो भवानत्र महासुरेन्द्रः ।
ततोऽसि तेजस्वितमो यथाऽग्निः
प्रदीप्तदारुः प्रहतान्यदारुः ॥ ६३ ॥

अभूदभूताभिभवः सुरारिः
प्रत्यस्तकालः खलु कालनेमिः ।
धनुर्ग्रहेणैव दिशो दशाशु
प्रदुद्रुवुर्यस्य सुराः शराश्च ॥ ६४ ॥
सहस्रमूर्धा द्विसहस्रहस्तो
देवान् विचित्रावयवान् विजित्य ।
असूयति स्मासुरसूदनाय
सहस्रशीर्ष्णे पुरुषाय वीरः ॥ ६५ ॥
स गोसुराणामपि भूसुराणा-
मुद्रासुराणां विदधे विघातम् ।
मुकुन्दमूलं तदवेत्य मानी
समूलघातं हि परं जिघांसुः ॥ ६६ ॥
मतङ्गजेन्द्रो हरिणेव मत्त-
श्चक्रायुधेन प्रतिचस्करेऽसौ ।
पराक्रमोऽयं क्रिययेति केचित्
स्वमाययैवेति परे पठन्ति ॥ ६७ ॥
व्रजेऽथ शौरिस्तव पूर्ववैरी
बालैव सा विक्रयमूल्यमस्य ।
त्विषा हसन्ती हरिनीलमालां
क्षणं त्वया भूप परीक्षिता या ॥ ६८ ॥
स देवतारिर्नरदेवपत्न्यां
नैवोग्रसेनाद्दुमिलादुदैत्स्वम् ।

न शालिबीजादवनीतलेऽस्मि-
न्नहो महावृक्ष उपैति जन्म ॥ ६९ ॥
विधेरिति सुतोऽभ्यधान्मम हितं हि तथ्यं वचो
न बन्धुरिह कोऽपि मे किमुत नित्यवैरी हरिः ।
कणं च कटुमुत्कटं जगति कृष्णसर्पं स्फुटं
लयं नयत तानसाविति निगद्य वेश्माविशत् ॥ ७० ॥

॥ इति द्वितीयपादेन्द्रवज्रावर्गः सप्तमः ॥

---

लोलानुरागं नियतानुरागः
सदोदितो हन्त तदोदयन्तम् ।
सहस्रतेजस्कमनन्ततेजा
हरिं हरिः सर्वगुणैर्जिगाय ॥ ७१ ॥
तान्तं नितान्तं तमसोदितेऽस्मिन्
प्रबुद्धमुच्चैः सुमनोगणेन ।
जलैर्धृतेनोष्णरुचौ विदग्धै-
र्धृतेन विष्णावियता विशेषः ॥ ७२ ॥
अग्रे पिशङ्गीं कदलीं निपात्य
गजानने वर्धितमात्र एव ।
मधुद्विषो दक्षिणमाचकम्पे
विलोचनं प्रास्तिपतेस्तु सव्यम् ॥ ७३ ॥
नागाकृतिं काण्डपटीं निरस्य
विकीर्य फुल्लं नयनप्रसूनम् ।

स कैटभारिर्नटवन्नराणां
कथाप्रसङ्गाय विवेश रङ्गम् ॥ ७४ ॥
पौरैः परं द्रष्टुमुपेयिवद्भि-
रधिष्ठितं वैषयिकैरनेकैः ।
रसेन रङ्गं परितोऽसुरारिः
समञ्चितं प्रैक्षत मञ्चवृन्दम् ॥ ७५ ॥
मञ्चावलेरैक्षत राजमञ्चं
महिष्ठशोभं महितं स मध्ये ।
सितातपत्रव्यजनांशुगौरं
सितत्विषो बिम्बमिवोडुमध्ये ॥ ७६ ॥
तत्र त्रिलोकीविजयं नु मूर्तं
सतां समुद्रिक्तमुपद्रवं नु ।
अघं नु घोरं यदुवंशजानां
स भोजराजं नु हरिर्ददर्श ॥ ७७ ॥
क्रूरक्रुधां काममदोत्कटानां
सुरद्विषामा(क)कुलितं कुलेन ।
विषण्णसत्वं स पुपोष रङ्गं
प्रविश्य हृत्पद्ममिवात्मपुंसाम् ॥ ७८ ॥
रामं रमातिक्रमलोलहेलं
निसर्गगौरं मदमन्युताम्रम् ।
क्षणं कटाक्षेण शनैर्नियच्छं-
श्चचार रङ्गे[1] सयशा रमेशः ॥ ७९ ॥

[1] स चराचरेशः ।

लीलापद्मच्छलेन स्वनदलिगुणवच्चारुचापं दधानः
कान्तोऽलं कृष्णकामः स्फुटमिषुधिपदे मालतीमालभारी।
कृत्वोमामैशमर्धं दधदरिविजयं ख्यापयन्निन्दुमौले-
र्हृत्वा मौलीन्दुखण्डं द्विरदरदनिभेनोत्सवोऽभूद्वधूनाम् ॥

॥ इति प्रथमपादेन्द्रवज्रावर्गोऽष्टमः ॥

---

गोविन्दसौन्दर्यरसैकताना
विभ्राजिता लोचनविभ्रमेण ।
स्त्रियः कृतालङ्कृतयः किलोचुः
समन्दहासा इव जातविद्याः ॥ ८१ ॥

पीयूषसिन्धुप्रभवं पुरस्ता-
त्पीयूषमापीयत एव देवैः ।
इदं तु लावण्यसमुद्रसारं
पिबन्तु कृष्णामृतमङ्ग सर्वे ॥ ८२ ॥

बालोऽर्यमा लोलगुणः सुगन्धि-
र्नो पद्मरागः परितामि पद्मम् ।
वि(हा)याय सर्वानिति रागलक्ष्मी-
रियाय कृष्णाङ्घ्रिमदोषलेशम् ॥ ८३ ॥

भासा नखा लज्जितबन्धुजीवा
एवञ्च नो लज्जितबन्धुजीवाः ।
पुन(र्न)र्भवत्वं दधुरीक्षकाणा-
मनादिपुंसो न पुन(र्न)र्भवत्वम् ॥ ८४ ॥

हस्तीन्द्रहस्तं कृतवान्विहस्तं
रम्योरुतेजोभिरयं नितान्तम् ।
तटित्विदोषं च तटित्प्रदीप्तं
पिशङ्गवासाः शशिलक्ष्मलक्ष्मीः ॥ ८५ ॥

वक्षोविहायोऽस्य तमालनीलं
नक्षत्रमालेयमलङ्करोति ।
न नायकोऽस्या विषयो हिमांशुः
कथं कलङ्कास्तपरिक्षयाणाम् ॥ ८६ ॥

अभ्यर्कमुन्मील्य बिसप्रसूनं
तोये स्वकण्ठद्वयसे तपस्वि ।
सरूपतामस्य ययौ मुखेन्दोः
स्थिरानुरक्तस्य हि युक्तमेतत् ॥ ८७ ॥

आभ्यां जगज्जन्मलयास्थिकृद्भ्यां
पद्मेक्षणोऽनुक्षणमीक्षणाभ्याम् ।
करोति मानं पुरमानिनीनां
भयङ्कराणां भयमासुराणाम् ॥ ८८ ॥

धम्मिल्लमुन्माल्यमयं पिनह्य
तं मल्लमालोक्य भुजौ धुनानः ।
शिरीषमालामृदुलौ च नूनं
प्रसङ्गभेदात्परिघीकरोति ॥ ८९ ॥

कण्ठे कुण्डलमण्डलं मणिमयं कृष्णस्य दोष्ण्यङ्गदं
लालाटं च ललामकुङ्कुमकृतं पादे रणन्नूपुरम् ।

अष्ठीवत् परभागगं पररिपोर्भागेऽस्त्यसङ्ख्या चमू-
रेवञ्चैष रिपून्निरस्यति यथा सिंहः सृगालानिति ॥९०॥

॥ इति उत्तरार्धोपेन्द्रवज्रावर्गो नवमः ॥

---

स पक्षिकेतुर्निजपक्षमुक्तं
विपक्षवर्गाभिहितं निरीक्ष्य ।
बाध्यप्रतिज्ञं व्यभिचीर्णरन्ध्र-
माभासवत् साभिहति न्यगृह्णात् ॥ ९१ ॥

बलान्मदान्धान् शलतोशलादी-
न्निनाय विक्रीड्य च दीर्घनिद्राम् ।
विक्रान्तिलक्ष्मीर्वसुदेवसून्वोः
सा पुंश्चली नैव तथापि जातु ॥ ९२ ॥

चचाल रोषानलरक्तनेत्रो
दहन्निवोग्रो जगदौग्रसेनिः ।
निस्ताडितोरुः प्रकटाट्टहासो
बिभ्रद्भ्रमद्भ्रूर्भ्रुकुटिं ललाटे ॥ ९३ ॥

अथासनं गोपकयोर्विधेयं
न-नन्द-गोपः सुतवान् सदारः ।
संवर्ध्यतां शूरसुतः सभार्यः
कंसश्च संसच्च तदेत्यवोचत् ॥ ९४ ॥

गुरुद्रुहेऽङ्गारदहे प्रजानां
धनस्य हर्त्रे गरदाय धात्र्याः ।

तस्मै निहन्त्रे वनिताशिशूनां
स्थाने तदा स्थानपतिश्चुकोप ॥ ९५ ॥
पुरा गरुत्मानिव सद्म शाक्रं
रथं खरांशोरिव वानरेन्द्रः ।
हर्तुं बलात्कीर्तिसितांशुमुच्चै-
रुत्पत्य देवो रिपुमश्चमाप ॥ ९६ ॥
महाजवं विष्णुपदे भ्रमन्तं
हरेस्तिरस्कारपरं महासिम् ।
जग्राह केशेषु स केशवस्तं
क्रोधं च मोहं च मदं च मूर्तम् ॥ ९७ ॥
निपात्य रङ्गाश्मनि पादपातैः
स्रवद्रसं निर्दयमर्दनेन ।
विद्विण्नृपालक्तकमेष पिष्ट्वा
शौरेः किशोरोऽरुणिताङ्घ्रिरासीत् ॥ ९८ ॥
निहत्य दैत्यं नरदेवदेहं
प्रपश्यतः संस्तुवतः सुरेशान् ।
कंसद्विषो रोषविभीषणे प्रा-
ग्रम्ये प्रसन्ने नयने अभूताम् ॥ ९९ ॥
ताम्राधरं सुहसितं हरिनीलनीलं
स्वानन्दरूपमतिसुन्दरमिन्दिरेशम् ।
आलोक्य तं सपदि मुक्तसमस्तबन्धः
शौरिः सजानिरथ योगिवदाननन्द ॥ १०० ॥

इयमिति शुकगीता लालिता प्रेष्ठ गोष्ठ्यां
श्रुतिवरवनितानां कृष्णकेली मयोक्ता ।
नरवर तव बोधं बुध्यमाना विदध्या-
दवददिति नरेन्द्रं भासुरं भूसुरेन्द्रः ॥ १०१ ॥

॥ इति पूर्वार्धोपेन्द्रवज्रावर्गो दशमः ॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते
शुभोदये गोविन्दकाण्डस्तृतीयः ॥ ३ ॥

---

अथ परिशुद्धिकाण्डः ४

भूपे भूम्ने कुड्मलीभूतपाणौ
भूदेवं तं विस्मिते वीक्षमाणे ।
चित्ताभिज्ञश्चित्रगुर्वाचमूचे
विद्वन् विधेयं कुतोऽभूत्तवेति ॥ १ ॥
प्रोचे विप्रः श्रूयतां शूर सत्यं
कौमारे मे तेन हंसान्वयेन ।
प्राप्तोऽपश्यं पण्डितान् रत्नमय्यां
भारत्यां स्त्रीसंहितायां सभायाम् ॥ २ ॥
नानासूक्तं व्यक्तसन्मण्डलाभं
बर्हिर्युक्तैर्ब्राह्मणैः सूचितार्थम् ।
तत्रावोचन्वर्णधर्माभिरामं
साध्वृग्वेदं केऽपि केऽपीतिहासम् ॥ ३ ॥
रूपं व्यक्तं व्यञ्जयन्तः स्वराणां
गाने योग्या योजयन्तः श्रुतीश्च ।

हस्ताभ्यस्ताः स्तोभतानैरगाय-
न्नुच्चैः केचित्साम गान्धर्वमन्ये ॥ ४ ॥
क्लृप्तं लोके याज्ञवल्क्यादिसद्भिः
कर्तुं धर्मान् स्वान् वितानेन कामम् ।
नानाकल्पं सद्यजुः कैश्चिदस्या-
मप्याख्यातं धर्मशास्त्रं परैश्च ॥ ५ ॥
ओजोभाजां वैरिवारं विजेतुं
चातुर्विध्येनोपदिष्टप्रयोगः ।
वेदोऽस्त्रादि क्रूर आथर्वणोऽस्यां
कैश्चित्कैश्चिद्धातुषो धीररम्यः ॥ ६ ॥
पञ्चाङ्गानामञ्चने सप्रपञ्चं
भूमेर्भर्तुर्गण्यनिर्गुण्यवादम् ।
मन्त्रैस्तन्त्रं योजयत् पञ्चरात्रं
केचित् स्माहुर्नीतिशास्त्रं परे च ॥ ७ ॥
यत्राख्याता कर्मभिन्नात्रिधातु-
र्व्याप्तिर्नानाप्रत्ययैरङ्गशुद्ध्यै ।
अभ्यास्यैकैः सप्रयोगोक्तिरस्या-
मायुर्वेदः शब्दशास्त्राब्धिरन्यैः ॥ ८ ॥
वीथीष्वष्टास्वेकयुक्तासु योक्तुं
वर्णान्यद्वद्वाजिनो योग्ययत्नैः ।
तद्वाराणां लक्ष्यते यत्र शिक्षा
शीक्षाऽश्वावीहापि विद्याऽश्वविद्या ॥ ९ ॥

[1]हाश्वविद्याऽपि पार्श्वे ।

अह्नां वक्त्रोक्तधर्मद्युतिचरणविधिः सत्रिकालार्थवादः
सोमाद्यैश्च ग्रहाग्र्यैश्चरणनियमतोऽतीन्द्रियज्ञानहेतुः ।
कैरप्याख्यायि कल्पः परिषदि समयो ज्योतिषोऽन्यैश्च विश्वा
विद्यास्तस्यामनृत्यन्नपि सकलकला याश्चतुष्षष्टिसङ्ख्याः ॥

॥ इति शालिनीवर्गः प्रथमः ॥

---

कण्ठेकालाः कलकण्ठाश्च हंसा
वीन्द्राश्चान्ये श्रवणानन्दरावाः ।
वन्दिव्याजादरणन्नूनमस्यां
मूलोद्यानं परिषद्युज्ज्वलायाम् ॥ ११ ॥
रत्नस्तम्भाद्गणशोऽपाश्रितांस्तान्
कांश्चित्कांश्चित्स्फटिकापाश्रयाप्तान् ।
रत्नाकारान् सकलाकल्पदीप्तान्
दृष्ट्वाऽपृच्छं नृप हंसान्वयं तम् ॥ १२ ॥
स्वामिन् केऽमी किममी सञ्चिरन्ते
केनाध्यास्या ससभेयं पुरीति ।
पृष्टस्तुष्टो गुरुराचष्ट किञ्चि-
त्स्मित्वा हस्तं निदधे मस्तके मे ॥ १३ ॥
दिव्या देवप्रतिमा वन्दिनोऽमी
नैषां कालात् किल काचिद्विपत्तिः ।
आकृष्यन्ते मुखकान्त्यैव राज्ञ-
स्तेऽयस्कान्तप्रभयेवायसार्थाः ॥ १४ ॥

नामान्येते सततं कीर्तयन्ते
यक्षस्यैता ननु नामानि विद्याः ।
तच्छुश्रूषावुपसन्ने प्रसन्नो
देवर्षौ प्राग्गुरुरूचे कुमारः ॥ १५ ॥
अस्यां पुर्यां रमते पौरवाणां
साधारण्याद्भरतः सार्वभौमः ।
वैश्वामित्रीतनयोऽमित्रघाती
वीरो मेरोरिव सिंहो गुहायाम् ॥ १६ ॥
वाणी वाणीं कमला राजधानीं
कान्तिर्मूर्तिं न जहात्यस्य जातु ।
ताभिः कान्तक्षणमोक्षाक्षमाभिः
साकं कान्ता निवसन्तीह नूनम् ॥ १७ ॥
अच्छे कच्छे यमुनादेवनद्यो-
रीजे यक्षं स मुहुर्यज्ञसंज्ञम् ।
को यातीमं भरतस्य प्रभावं
नाके ना कं प्रसभेन प्रयाति ॥ १८ ॥
तुष्टा अष्टादश धन्याः शुकाद्याः
शाण्डिल्योऽयं भगवान्नारदोऽपि ।
सूतश्चायं भरतेनोपक्लृप्ता
गायन्त्येते स्वरवीणाप्रवीणाः ॥ १९ ॥
छान्दोग्यो याज्ञवल्क्यः कठकमठतुरा माठरः कौण्ठरव्यो
माण्डव्यः कौण्डिनाख्यो निगमशिखितनूपैङ्गिमण्डूकमुण्डाः ।

तित्तिर्याख्यैतरेयौ कुशिकतलवकारारुणाः पिप्पलादो
  गायन्त्यन्येऽप्यसंख्या अमुमिति गुरुभिः शिक्षिता वेदवेद्यम्॥

॥ इति वातोर्मीवर्गो द्वितीयः ॥

---

नृपवसुमतीरत्नै रत्नैर्मधुप्रसवैरपि
  च्छलबल(ह)भृतैरर्थैर्भुक्तैर्न तृप्यति जात्वपि।
जनकसुतया रन्तुं लोलो रहस्युत कान्तिमां-
  स्तव दशमुखो मित्रं चित्रं समः पिशिताशिनाम्॥ २१॥
निद्राविद्रावितेहश्चिरमथ झटिति भ्रातृभङ्गे प्रबुद्धः
  क्रुद्धो भिन्दन्निवोर्वीमतिरभसपदैः सर्वसंहारिरंहाः।
देवर्षीन्द्रापराधी शिशुपशुवनितानिर्घृणोऽत्यन्तदीर्घो
  ज्येष्ठं श्रेष्ठं विधत्ते द्विगुणमपि यथा कुम्भकर्णोऽभिमन्युः॥
बुभुक्षुर्नो दित्सुर्न च न हि विवक्षुर्व्ययभयात्
  समो लुब्धो लब्धं कृतकधनपालेन धनवान्।
इयान् भेदो वीते महति च धने स त्वविकृतिः
  कणे वीते लुब्धश्चिरमनुशयाग्नौ निपतति ॥ २३ ॥
स व्याप्नोत्यदिवा दिवानिशमयं स च्छादयत्यक्षिणी
  सर्वाक्षांस्तरसा क्षिणोत्ययमहो सोऽधीरयं वैरधीः।
वैषम्ये कविनेदृशेऽपि तुलितौ मोहान्धकारौ मिथः
  साम्यांशेन यथा त्वदास्यशशिनौ कान्ताकलङ्कानन॥२४॥
ताम्राक्षे स्खलितकलाक्षरप्रलापे
  प्रस्विन्ने मदकरमद्यपेऽतिमत्ते।

श्रेयांसं जगति समं च नेक्षमाणे
मन्त्रान्ते मतिरहिते हि तिष्ठसेऽस्मिन् ॥ २५ ॥
मधुरोऽपि रसो निगीर्यते नो
मुहुरुद्गीर्यत आतुरो यथाऽर्थी ।
निजदोषविकारतो निदाना-
दरुचिर्गुर्व्यसहस्य रोगिवत्ते ॥ २६ ॥
भक्तिः स्वैरिण्यङ्ग हिंसोत माया
भ्रान्तिर्हन्ताहङ्कृतिश्चाभ्यसूया ।
त्वन्मित्राणां पत्न्य आत्मस्वसारः
कोशं नाशं निन्युरन्तःपुरान्तः ॥ २७ ॥
अवेहि जननीपतिं द्विजभिदं वसुस्तेयिनं
प्रसुप्तिमुत कश्यपं नृपगुरुद्विषं चेति षट् ।
कटून् बहुलसोदरान् स्वकटुकोत्कटांस्तत्सुतान्
बलान्यवनवल्लभांस्तव परोक्षतामीयुषः ॥ २८ ॥
नरवर बहुपद्याद्याह्वयायां गतायां
पुरि पुरि समभेते मित्रवेषा अमित्राः ।
त्वदुदयकृतभङ्गाः कालिकातन्तुजाता
इदमिह न विचित्रं तेन कार्यं तु कुर्याः ॥ २९ ॥ ३० ॥

॥ इति संकीर्णवर्गस्तृतीयः ॥

---

जलजदलवदासैर्जीवनीयैरसङ्गो
विधुरिव धवलिम्ना लालनीयो निजेन ।

कविभिरिति विकोपः शङ्करः शङ्कनीय-
स्तव कथमपरागः प्रीतिमानप्रियोऽभूत् ॥ ३१ ॥

नियमिनियमवार्धेर्वर्धने चन्द्रिकाभा
प्रबलविनयपद्मोन्मेषणेऽर्कप्रभाभा ।
बलविकलनराणां पालने पत्तनाभा
समवति तव बन्धून् प्रातिमर्षी क्षमैका ॥ ३२ ॥

प्ररुचितमुचितेभ्यो द्राग्ददात्येव नित्यं
कृतमपि सुकृतं नो कीर्तयेत्कीर्तनीयः ।
धनमतनु च दत्त्वा भूरिदो नानुशेते
कमगुणमनुपश्यन्नत्यजस्तादृशं त्वम् ॥ ३३ ॥

प्रतुलयति तुलावद्योऽखिलार्थान्विमिश्रं
गुणिनमगुणिनोऽर्थाद्धंसवत्स्वीकरोति ।
क्षणमपि खलु संख्यात्यक्षमन्तीव लक्षं
न हि किमु तव मोहात्स्याद्वरीयान्विवेकी ॥ ३४ ॥

अपि बहुभिरलङ्घ्यो नैव सीमातिलङ्घी
निजगुणपरिपूर्णः सिन्धुतुल्यो विनीतः ।
सकलकलममूर्मिः क्षुभ्यति ह्यब्धिरुच्चैः
स्थिरमयममितोर्मिः स्थेष्ठ इत्येव भेदः ॥ ३५ ॥

गुणिनि न गणयेद्यो दोषमिन्दाविवाङ्कं
लघुमपि निजदोषं शल्यवन्नो सहेत ।
अकरुण करुणावांस्त्वद्गुणान् सद्गुणेभ्यो
गणयति न तु दोषं व्यक्तमस्पर्धनोऽसौ ॥ ३६ ॥

शुभ गुरुरतिमान्यो मौलिजातं स्पृशद्भि-
र्न सदसि स ममारापीडितो मन्त्रिवर्गैः ।
इति मम रिपुगूढाक्षेपवज्रैरभिन्नं
हृदयमिदमदार्यं तात केनापि नूनम् ॥ ३७ ॥
ननु भरतसुता सा भारतानाममीषां
सुमतिरवरजाऽपि ज्यायसी स्याद्गुणौघैः ।
अलमलमतिवाचां चापलैर्मे द्विजाते-
र्न किल कुलरमण्यो वर्णनीयाः सभायाम् ॥ ३८ ॥
त्यज रुजमिव राजन्स्वाश्रितां चाशुभालीं
भज सुजनमपीमं बाह्यमप्यौषधाभम् ।
यज च तमभि यक्षं प्रार्थिनां कल्पवृक्षं
ध्रुवमिति कुरुषे चेद्वल्लभां त्वं लभेथाः ॥ ३९ ॥
मन्त्रीन्द्रास्तव विश्रवा विपुलदृक् प्रष्ठो रसो गाण्डिको
भृत्येन्द्राः सुमुखः सुबाहुरभिगः सम्मोक्षसौख्याविमे ।
सख्या चित्रगुणा सहारुणगणैः सख्यं निगूढं गता-
स्तस्मादेव विपद्यसे यदि रिपून्मुञ्चन्ति सम्पत्स्यसे ॥ ४० ॥

॥ इति मालिनीवर्गश्चतुर्थः ॥

---

सुश्रवसः श्रुतवानिति वाक्यं
चित्रगुरत्र विचित्रपदार्थम् ।
स्वागसि भूयसि विप्रतिसारी
वाचमुवाच शनैर्विवशाश्रुः ॥ ४१ ॥

हन्त मया नियतैः श्रियमाप्तुं
क्रिङ्करमन्त्रिभिराप्यघमेतत् ।
पामरसारथिनेव विनीतै-
र्वारिधियेरिणभू रथवाहैः ॥ ४२ ॥

त्र्णय नो व्यसनार्णवपारं
निर्णयतिद्भगवन् दयया त्वम् ।
दुःखमपक्रियया स्वजनाप्तं
निष्क्रियया शमयन्ति हि सन्तः ॥ ४३ ॥

सज्जनता जननीव शिशूनां
क्षाम्यतु नोऽप्यपराधसहस्रम् ।
दण्डमिहैव विधेहि न भूपे
प्राज्ञ नमोऽस्तु नमोऽस्तु पुनस्ते ॥ ४४ ॥

राजसखे वदतीदमवादी-
द्राजगुरुर्मनसैव विचार्य ।
पातकिभिः पतितैश्चिरयोगे
स्यात्पतितोदितनिष्कृतिरित्थम् ॥ ४५ ॥

पञ्चमहांहसि वञ्चनचुञ्चौ
सङ्गतिरङ्ग कृताऽऽरुणिवर्गे ।
यत्तु भवद्भिरताद्भिधिविद्भि-
र्नाद्रिमतो भवतां महदंहः ॥ ४६ ॥

दुर्दहमार्द्रवदेतदनार्द्रं
नेन्धनवह्निगदन्ति मुनीन्द्राः ।

आशु तपोज्वलने व्रजिनैधो
वायुभुजोऽथ दहन्तु भवन्तः ॥ ४७ ॥
प्रश्रयिणः प्रणताः शुभभक्ताः
सुश्रवसा विधिनेत्युदितेन ।
विष्णुपदीमभजन्विसृजन्तः
स्वान्विषयान्यवनैरभिभूतान् ॥ ४८ ॥
ऊर्ध्वभुजाः पवनाशनतृप्ता
एकपदस्थितयः स्थिरचित्ताः ।
यक्षबलौ नियताः प्रतिसन्ध्यं
दक्षसुता इव ते सममूषुः ॥ ४९ ॥
अथ पञ्चतपा द्युसिन्धुतीरे
नृपतिर्दुष्कृतनिष्कृतिं विधित्सुः ।
सह सुश्रवसैव यक्षयज्ञं
विदधे द्वादशवत्सरान्विभूत्या ॥ ५० ॥

॥ इति दोधकवर्गः पंचमः ॥

---

स कदाचिदाश्रमपदं स्वमविरतमहामहं गतान् ।
ऐक्षत भरतसुतांस्तरसा प्रणताञ्जयेति निजपादपद्मयोः ॥ ५१ ॥
अवलोक्य तान् प्रमदतोऽश्रु नयननलिनयोरसुस्रवत् ।
प्राक्तदनु तदनुजां स्मरतः परितापतश्च जगतीपतेर्भृशम् ॥ ५२ ॥
सुकृतिः समेत्य नरनाथमथ चरणयोः समर्पयत् ।
चारुरुचि सुमतिगामि पुरा मणिदाम गात्रमपि कोमलं निजम् ॥

रहितेश्वरीयमिति वीक्ष्य कटुशुचि शुचिव्रते नृपे ।
किञ्चिदवदति निरुद्धगले समसङ्कटोऽपि स जगाद चित्रगुः ॥
सुकृते सुमङ्गलि सुवाणि सुमति गतिमाशु नो वद ।
कच्चिदभिहितगुणाऽस्यधुना स्वजनस्य कच्चिदवसीह जीवितम् ॥
सति जोषमास्स्व न तथापि यदि विपदुपगतोल्बणा ।
शोकशिखिनि मरणं हि वरं स्थिरयाऽऽशयाऽल्पशमितेविलोठनात्॥
उदितेति साऽभ्यधित भूपमयि नरपतेऽवधारय ।
याचितमगणयन्त्यगमन्मम सा दवे दवमवेक्ष्य मानिनी ॥ ५७ ॥
क्षणभक्षितामजगरेण नरवर निरीक्ष्य ते प्रियाम् ।
मृत्युमहमनवाप्य च्छलाद्धरतस्य गोपुरमभिद्रुताऽरणम् ॥ ५८ ॥
तव लोकनाथ तनयाऽऽपदजगरमुखं हताऽस्मि हा ।
पाहि न हि परमकारुणिक स्वजनागसः स्मर मनाग्महन्निति ॥
पित्रा मैत्रापनीता भुजगजठरतो नाथ नाकापगाया-
स्तीरे वीरव्रतत्वादपि विपदि सती सम्पदीवाधुनाऽऽस्ते ।
मुक्ताहारोज्ज्वला सा विपुलवलयविभ्राजिताभ्यच्छवासा
नानाप्ताऽवाप्तकान्ता स्वपरिजनतया पार्थिवान्वीक्षमाणा ॥

॥ इति उद्गीतिकावर्गः षष्ठः ॥

---

सौकृतीमिति गिरं स शुश्रुवान्
श्रद्धद्धदिमां मणिस्रजम् ।
प्रैष्ययैव सह सौरसैन्धवं
तीर्थमन्यदथ मान्यमाययौ ॥ ६१ ॥

आश्रमे शितिपलाशशोभिते
शोभितां वनभृतीव विद्युतम् ।
वीक्ष्य स व्यवहितोऽथ वल्लभा-
मालिमभ्यधित भीरुरागसाम् ॥ ६२ ॥
पूर्वतो दशगुणप्रभा शुभा
पूर्वपक्षसितमूर्तिमूर्तिवत् ।
मानिनी सुलभलक्षणैव त-
त्प्रत्यभिज्ञमुदपादि मे मनः ॥ ६३ ॥
यक्षराजपरिचर्यया तप-
स्सम्पदेव परिपूर्यमाणया ।
भारतीत्थमतिभाति साम्प्रतं
चन्द्रिकेव शरदाऽतिसुन्दरी ॥ ६४ ॥
चण्डमण्डलिनि चण्डिमाहता
चञ्चला हिमरुचौ हिमाहता ।
लोकलोचनसुखावहा रुचिः
काममस्त्रमिह कामिनीमिता ॥ ६५ ॥
आलि लालनमलीककारिणो
नो शमाय मम सान्त्वय प्रियाम् ।
इत्युदीर्य पतिमाप्तमग्रतो
न क्रुधैक्षत सलज्जया सती ॥ ६६ ॥
तामुपेत्य सुमुखीमधोमुखीं
साश्रुमास्फुरितलोहिताधराम् ।

पादपद्मलिखितावनिं सखी
पादयोर्निपतितेदमब्रवीत् ॥ ६७ ॥
देवि देहि करुणामृतोक्षितं
वीक्षितं स्मितयुतं सुसूनृतम् ।
भूभृते न तमुदास्य धार्मिकं
साधु तप्तमनुतप्तमागतम् ॥ ६८ ॥
भीमजेव नलिनेक्षणे नलं
प्रोषितं पतिमितं प्रतोषय ।
कल्पकल्पदिवसो वियोगतो
मा स्म गात्त्रिदिवसुन्दरीरयम् ॥ ६९ ॥
धुनाना सा पादस्पृशमिति सखीमुक्तवचसं
विपक्षं प्राणेशं प्रणतमवलोक्याथितवती ।
नृप स्वस्ति स्यात्ते सखि यदि सखी स्याः सुखकरं
नयारुण्याः पार्श्वं नृपमिति वदन्त्यन्तरधित ॥ ७० ॥

॥ इति (रथोद्धता) अपरान्तिकावर्गः सप्तमः ॥

---

सकृदवेक्षितां पुनरवीक्षितां
भरतनन्दनां भुवनसुन्दरीम् ।
विधुरधीश्चिरं शयितबोधितः
स्मरशराहतो भुवि पपात सः ॥ ७१ ॥
चलजलार्द्रया निजभुजिष्यया
मतिमतां वरो मतिमनीयत ।

विरहशोकदामनभिनन्दिता-
मिदमिलाभृता विलपितं भृशम् ॥ ७२ ॥
विरचिताञ्जलौ विरहवह्निना
नियमशोषिते दहनमीयुषि ।
अयि मयि प्रिये प्रणयिनि क्षणं
सकरुणाङ्कुरां कुरु मतिं सति ॥ ७३ ॥
स्वपदसन्निधौ विपदमागतं
नियमवाञ्जनो वृकमपीक्षते ।
कमललोचने तव विलोचने
न पतिते कथं निपतिते मयि ॥ ७४ ॥
अरुणजानयैर्यवनयोधनैः
स्वजनदूषणैरहिततोषणैः ।
नियमधारणैरपि वियोगजैः
सुमुखि तेऽखिलैः कृशमवाशु माम् ॥ ७५ ॥
ननु मयाऽऽगसां दशशती कृता
स्वजनदुस्सहा सुतनु किन्त्वथो ।
मरणसंशये शरणमीयुषो
रुचितदण्डमादिश वरोरु मे ॥ ७६ ॥
शशिसमं मुखं सुहसितामृतं
प्रकटयाधुनाऽऽलप शुकालपे ।
अपरथाऽपि ते निशमनात्सखा
सखि भवान्यहं सति भवान्तरे ॥ ७७ ॥

इति विलापिना क्षितिभृताऽमुना
हरिपदे रता हरिणलोचना ।
प्रतिघराहुतश्च्युतमुखेन्दुतः
सुतवचोमृता स्मितयुतैक्षि सा ॥ ७८ ॥
विरम वीर ही शुचमवेहि मां
दयित मा दया मयि दयाकर ।
विधुरतां विधेर्विधुमुखेयुषीं
नियमबन्धनां त्वयि न बन्धुता ॥ ७९ ॥
प्रश्नानेतान्परिहरसि चेच्चक्रवर्ती सुतः स्या-
न्न स्यान्नो चेत्तव निजगदे नारदेनेति नाथ ।
वन्ध्या चेत्स्यां विरतसुरता योगसंयोगिनी स्यां
क्षन्तव्यं मे न्यगददुचितां भारतीं भारतीत्थम् ॥८०॥

॥ इति मात्रासमकवर्गोऽष्टमः ॥

---

नृपे चिन्तातान्ते द्विजयतियुतास्ते भरतजा-
स्तपोविद्ये स्वीये निदधुरुदयी स्यादयमिति ।
नृदेवादेवानामुपगतवतां कौतुकवतां
कथाऽऽसीद्दम्पत्योः परिषदि नभोभूमिगतयोः॥८१॥
दिवं भूपानन्तां दशशतसमुद्रोर्मिविततां
सदा सस्योपेतां वद विरहिताकिञ्चनजनाम् ।
सनानाकर्मोर्मिर्व्युपरतिरियं बीजसदृशै-
र्युता जीवारूढैः प्रकृतिविकृतिर्योगिरहिता ॥ ८२ ॥

नृप क्रूरं चक्रं द्यति हि सकलं हंसविकलं
न दृश्यं न स्पृश्यं भ्रमदगणितारं कथय तत् ।
अहं मन्ये मान्ये लवत्रुटिकलाकल्पविदलं
वलन्तं कालं तं ततममलिनानामभयदम् ॥ ८३ ॥
मया नेदं चोद्यं सदसि नियमाद्वच्मि रहिणं
पुमांसं पुंश्चल्याः पतिमिति पते वेत्थ किमिमम् ।
मया नेदं वाच्यं स हि करतले कन्दुक इव
प्रसिद्धो निर्लज्जो विषयमतिवश्योऽल्पपुरुषः ॥ ८४ ॥
पुमानेको राज्ये वहति जनताः षण्डवनिता
विना वेत्ता कर्ता क इह करकर्णादिकरणैः ।
पुमानेको विष्णुर्वहति चिदचिद्रूपमखिलं
पराधीनं शुद्धप्रकृतिमयविश्वावयवकः ॥ ८५ ॥
अतार्या तार्क्ष्येणाप्युरुकमठमत्स्या कटुहिमा
स्रवन्ती हन्तैका स्रवति च तटिद्भ्रान्त्युभयतः ।
अमेया मायेयं हरिमहिमसंज्ञा विषसुधा-
समाऽसत्साधूनां सखि सकलसृष्ट्यप्ययकरी ॥ ८६ ॥
न-वक्रान्ताङ्गो यः समजनि शुकाद्भूपभवने
दधच्छुभ्रं पक्षं न किल चपलं वैष्णवपदे ।
दधच्छुभ्रं पक्षं विषमसमयो हंस उत कः
प्रिये प्रश्नोऽयं स्वं परिहरति नीरेफमुदितः ॥ ८७ ॥
प्रसन्नामासन्नां दयित सुकुमारीं स्वदयितां
कृपाण्या को हन्ति प्रणयकृपणः स्वामथ तनूम् ।

गुरोर्गा मैरेयी गुरुमपि गुरुं लङ्घयति वा
हतोऽसावुक्त्वेत्थं स्मृतगुरु मुमोह क्षितिपतिः ॥ ८८ ॥
विपन्ने सम्पन्ने क्षितिभृति जने हेति वदति
प्रसन्नेऽस्यासन्ने प्रकृतिनिकरे रोदविवशे ।
स्मृतो भारत्याऽऽगाद्भरतसभया भासितहरित्
क्षमाभृल्लक्ष्म्या प्राग्घरिरिव स हंसान्वय इमान् ॥८९॥
अलीकमपि शावकं सपदि चक्षमे वीक्ष्य तं
वधूं कुपितवच्छुभां स परिरभ्य निन्ये मुदम् ।
सभां स भरताज्ञया सुरसभाजितां दत्तवान्
सभाभुवि युयोज तावतिचिराय जायापती ॥ ९० ॥

॥ इति शिखरिणीवर्गो नवमः ॥

---

जगज्जिगीषुर्विभवी बुभूषुः
पुत्रं सिसृक्षुः पुरुषप्रसादात् ।
सम्मन्त्र्य हंसान्वयसुश्रवोभ्यां
शुभोऽश्वमेधं क्रतुमाजहार ॥ ९१ ॥
हयं पुरस्कृत्य ययुः पुरस्ता-
त्ते भारता मन्त्रिपुरोहिताश्च ।
तूर्णं मनोवत्सुमनस्विनो गां
प्रदक्षिणत्वेन निसर्गदक्षाः ॥ ९२ ॥
अमी समेध्या विषयाननेकान्
सारस्वतानङ्गकलिङ्गपूर्वान् ।

काश्याह्वयं माथुरमण्डलं च
विजित्य गान्धारमुतावलन्त ॥ ९३ ॥
अहो अहिंसाभिरतं स्वनाथं
विज्ञाय यज्ञाय कृताभ्यनुज्ञम् ।
वीरा रिपूनानमयन्न जघ्नु-
र्महोदवाहा इव वेतसौघान् ॥ ९४ ॥
कृतां कुरुक्षेत्रभुवीक्षमाणाः
शालां विशालां यजमानभृत्याः ।
वाजेन वाजीन्द्रयुजो व्रजन्तः
पौररुध्यन्त सपूर्ववैरैः ॥ ९५ ॥
अखण्डखण्डेश्वरमण्डिताङ्गौ
यः सार्वभौमेऽप्यरुणे यियक्षुः ।
अश्वेन हत्वा पुरुषं पशुं तं
यजाम इत्यूचुरुदायुधास्ते ॥ ९६ ॥
लसन्तु वल्गन्तु सकृद्रणोर्मौ
स्फीता अलं फेनसमा असाराः ।
भिद्यन्त आशु प्रतिकूलपातै-
र्वदन्त इत्यभ्यपतन्नमी तान् ॥ ९७ ॥
महास्त्रशस्त्रे ससुरासुरौघे
तेषाममीषां च रणे प्रवृत्ते ।
वीरा अशेषा विषयेषु जाताः
शुभाशुभा अप्यभितः प्रजह्रुः ॥ ९८ ॥

हरिध्वजं सुस्मितया सुमत्या
नुन्नाश्वमारुह्य रथं नृपोऽगात् ।
रोपैरपास्यारिबलं महास्त्री
बबन्ध संयत्यरुणं सस्नुम् ॥ ९९ ॥

सगणमरुणं मुक्त्वा देव्या गिरः पतितं पदे
समुपकरणैश्चक्रे सर्वैः सुवर्णमयैः क्रतुम् ।
सकलजनताः सन्तर्प्यार्थैः शुचिक्रियया कविः
स गुरुगदितस्तुत्या यज्ञं वरान्नृवरोऽवृत ॥ १०० ॥

॥ इति प्रथमचतुर्थपादोपेन्द्रवज्रावर्गो दशमः ॥

---

श्वेतांशोः श्वेतिमानं जयतु जनयतु प्रार्थनीयां प्रगल्भै-
र्लक्ष्मीं लक्ष्मीश कुर्यादमृतमपि महानेष पीयूषसिन्धुः ।
आरुह्यारुह्य वेलामवशमवपतन्नातितंसुः समस्तं
त्वत्कीर्तिं सोऽनुकर्तुं प्रभवति भुवनव्यापिनीं नाधुनाऽपि ॥

पातालान्ते मृणालीधवलिमललितव्यालवृन्दायमानं
क्षित्यां क्षीराब्धिशुद्धस्फटिकदरहिमागारहारायमाणम् ।
भानुष्णाभायमानं नियति दिवि हसद्देवदेवीमुखेन्दु-
श्रीपीयूषायमाणं विशदयति यशो विश्वमेवं तवेश ॥ १०२ ॥

यन्मूलांशोपमूलैर्जगदतिरमते हन्त चिन्तामणीन्द्रै-
र्यत्पत्रैः कल्पवृक्षैररुणकिसलयैः पारिजातैश्च यस्याः ।
पुष्पैः पुष्पाग्रणीभिर्निधिभिरपि फलैरिन्दिराद्यैर्वरेशैः
कीर्तिश्रीकल्पवल्ली तव भुवनवने देव देदीप्यतेऽसौ ॥

गेहे गेहे ललन्ती मनुजमुनिजनस्वर्गिवर्गोरगाणां
कामं कामं नयन्ती रतिमनवरतं प्रापयन्ती च तांस्तान् ।
कामाल्ँल्लोकप्रसिद्धं जनयति च महानन्दनं स्वैरिणीत्थं
पातिव्रत्यं विशुद्धं वहति तव हरे कीर्तिकान्तेति चित्रम् ॥
नो देवैरेव सेव्या सकलरतिकरी दानवादिस्त्सिता ते
नोदन्वन्नोदलभ्या स्वयमतिसुलभा कालकूटानुजा नो ।
स्वाविष्टा विष्टपान्तर्न कलशनिलया नोपचीर्णोर्मिभेदा
त्वत्कीर्तिश्रीसुधेयं जयति नवसुधां सोदरी श्रीशतस्य ॥
एकः श्लोकस्तवायं विकसति विविधः सर्वतोभद्र एवं
विस्पष्टैकाक्षरः सन्नविरतचतुरावृत्तिमांश्चक्रसक्तः ।
नानावृत्तप्रवृत्तः प्रकटनवरसो वर्णनीयस्वभावः
सर्वालङ्कारशारः कथय कथमहो गौडवैदर्भवन्द्यः ॥१०६॥
पूर्णाद्ब्रह्माण्डपात्रादिव विधिकरकान्निर्गता स्वर्गिसेव्या
कर्पूराभ्यच्छपूरा शिवशिवशिरसा लालिता पातकघ्नी ।
गङ्गा कीर्तेः समा ते कथमपि न हि न ह्यङ्घ्रिपद्मं सकृत्ते
प्राप्ता सा निम्नगोच्चैर्गतिरियमनिशं विस्मृतो भेद ईदृक् ॥
आनन्दं चन्द्रिकावद्दिशति दृशि तमो हन्ति भास्वत्प्रभावत्
पुंसां कालावलीवत्सकलततिमती शाश्वती देव दिग्वत् ।
आर्यविद्वैरिघोरा जलधिदुहितृवत्सर्वदा सेव्यसुश्रीः
[1]..... कीर्तिरेवं जयति भवति तच्छ्रीः समस्तासमाऽस्ति ॥

---

[1]कीर्त्या ते सम्भावितः पाठः ।

त्वत्कीर्तिं कीर्तयिष्यंश्चतुरतरचतुर्वक्त्रतामाप शम्भुः
शङ्कावान् शङ्करोऽसाववहदपि पितुर्वक्त्रमुद्रिक्तमेकम् ।
स्कन्दोऽप्येवं विशेषाद्दशशतमुखतामाप शेषोऽप्यशेषा
न प्रापुः पारमस्या नर इव जलधेः का कथाऽस्मद्विधेषु ॥
यशश्चित्रं चित्रं तव भुवनसारामृतमिदं
ततश्चित्रं चित्रं तव गुणगणः कीर्तिगणवान् ।
अहो चित्रं चित्रं गुणगणगणाढ्यं वपुरतो
भवांश्चित्रं चित्रं स्वयमगणितात्माऽथ न परम् ॥ ११० ॥

॥ इति स्रग्धरावर्ग एकादशः ॥

---

संसाराद्रिवने विसौख्यसलिले दीप्तार्तिदावाकुले
धावन्तो विषयैरिणाम्बुतिषया हा नाथ मोहाद्वयम् ।
हंसानां मधुरै रवैरवगतां प्रत्यागताः साम्प्रतं
त्वल्लीलामृतनिम्नगां सुखकरीं यज्ञाख्य यज्ञाधिप॥१११॥
दृष्टेयं चपलाविलासचपला भौमी विभूतिर्विभो
पातातङ्कविदारिते स्वहृदये नास्ते सुखं नाकिनाम् ।
सत्यं सत्यमपि प्रणश्यति शनैरेतैरलं चापलै-
र्भक्तिं भक्तजनप्रिय प्रदिश मे पादारविन्दे तव ॥११२॥
नाके वा नरकेऽपि वा नरकुले तिर्यक्कुले वाऽऽकुले
कर्माकर्षति यत्र यत्र किल मां स्यां तत्र तत्रोन्मनाः ।
एतं नाथ मनोरथं प्रदिश मे दीनाय दीनार्तिहन्
सर्वत्राव्यभिचारिणी सहचरी भक्तिः सखी स्यात्त्वयि ॥

नाथ त्वच्चरणे रतिं न विदुषि त्वां हंसमात्मस्थितं
शोकं नास्मरमित्यनुस्मृतिभिदोः क्रोधं च कामक्रुधोः ।
उत्साहं तव संस्मृतौ भयमपि त्वद्विस्मृतौ त्वद्रिपौ
निन्दां विस्मयितां त्वयीश समतामन्यत्र मह्यं दिश ॥
मुग्धं माधव चित्ततर्णकमिमं तूर्णं चरिष्णुं वृथा
कामव्याघ्रवरो जिघृक्षति पदं सोऽन्वेतु ते वत्सवत् ।
पाहीमं च कृपाकरोऽसि कृपणे शुल्कं यशोदाशिशो
मातुस्तस्य मतेस्तु मुग्धमखिलं दास्यामि दास्याः स्तवम् ॥
नेत्रेणाशु पिनह्य मां स्वविषये नैके बतैकं जवात्
कर्णे दुर्मुखदुर्मदादिकितवाः कृत्वाऽग्रतो घ्नन्त्यहो ।
सूनुं साम्बमपीपलत् किल भवानेवं विपन्नं पुरा
तातं साम्बमवाधिकं करुणया मामात्मजं बालकम् ॥
कर्णे मेऽस्तु सुवर्णकुण्डलमलं स्वामिंस्तवानन्ददं
त्वद्रूपाञ्जनमीक्षणेऽपि मधुरं स्तोत्रामृतं चानने ।
स्यात्कल्याणकृतातिकान्तकटको हस्ते महद्भूषणै-
रेतैरेव भवे भवेऽपि भगवन् स्यां भूषितो नेतरैः ॥११७॥
मा स्माजिघ्रमनर्पितं तव पदे मा श्रौषमन्यां कथां
मा स्प्राक्षं विमुखांश्च तेऽनुपहृतं मा स्मैव किञ्चिद्रसम् ।
मा वोचं भवतः प्रसङ्गरहितं मा द्राक्षमेव द्विषं
मा काङ्क्षं त्वदगोचरं किमपि मे स्वामिन् दिशेमान्वरान् ॥
माता त्वं मम मातुलोऽस्यसि पिता त्वं बान्धवो बन्धहन्
स्वामी त्वं मम नन्दनोऽसि दयितोऽस्याचार्य आर्यः सखा ।

स्वानन्दाय नमो नमो भगवते श्रीवासुदेवाय ते
भूम्ने भक्तपरायणाय च नमो नारायणायात्मने॥११९॥
स्तोता दासस्तु कस्ते क्व पुनरहमहो प्राकृतः किन्तु ते स्वा-
द्दासानां दासदास्यं स्वचरणरजसा लज्जितस्वर्गिवर्गम्।
यज्ञेनानेन यज्ञ प्रदिश शुभदृशं मे प्रसीद प्रसीद
प्राणेशेति प्रणीय प्रणतिमनुपमामेष सस्मार विष्णोः॥
सुरतरुकुसुमैः स्वः पाणिबन्धैः पृथिव्यां
परिषदि वरदानैर्मान्यमानो जनेन।
पतिरुपचितबोधः साधु नीलोत्पलाक्ष्या
स्मितविलसितमुख्या सामि वीक्षाम्बभूवे॥ १२१॥

॥ इति शार्दूलविक्रीडितवर्गो द्वादशः॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते शुभोदये परिशुद्धिकाण्डश्चतुर्थः॥

---

## अथ अभ्युदयकाण्डः ५

रमणी रमणीयगुणं रमणं
कमला कमलाक्षमिवाभ्युचितम्।
पुरतः पुरतस्स्थितया मुदिता
सभया सभयाऽभजतावनिपम् ॥ १ ॥
विषयेषु स पञ्चसु पञ्च निजान्
निदधे सचिवान्नियमेन शुचीन्।
निजधर्मपथागतमर्थचयं
पुरि यक्षमखाय निनाय सखा ॥ २ ॥

कनकानकचामरचारुमणीन्
मधुहेमघटान्मणिपद्मघटाम् ।
धनमाहृतमाहृतमप्यमितं
व्ययमेष निनाय परार्चनया ॥ ३ ॥
विविधं विधिमाचरतोऽस्य गुरुः
स मुदोपदिदेश महेशमहे ।
अपि वन्दिगणा जगुरात्मभुवं
सततं स्फुटनामधुरं मधुरम् ॥ ४ ॥
न पिपासति नाऽपि जिघत्सति नो
न च किञ्चन यत्र भजेदशुभम् ।
अवरोधवरे शुशुभेऽथ शुभः
शुभया प्रभया वियतीव रविः ॥ ५ ॥
विहितोन्मदमन्मथमन्थरया
नवमङ्गलसङ्गमलज्जितया ।
सुकृतेः करपल्लववेल्लितया
कथमप्यगमि प्रियया प्रणयी ॥ ६ ॥
सुरतं सुरवारवधूरुचितं
क्रमवर्धितकाममनारमितम् ।
अनयोरमनुष्यनिसर्गलवं
मनुजेषु जडेषु वदामि कथम् ॥ ७ ॥
विनयाम्बुनिधौ प्रणयाम्बुनिधौ
सुरताम्बुनिधौ च विहृत्य चिरम् ।

गुणसिन्धुरतश्चतुरब्धिमतीं
सुमतीं जगतीमिव सोऽभ्यधित ॥ ८ ॥
तव तन्वि नवं नवमेव वयः
स्वयमेव नवोत्पलगन्धि वपुः ।
सततोज्झितमानवधर्मलवं
रुचिराद्रुचिरं न पुरा विदितम् ॥ ९ ॥
कर्णद्वये कनककुण्डलयोर्युगं ते
मुक्तागुणोऽप्युरसि नायकपद्मरागः ।
व्याधामरत्नमतिभासुरमिन्द्रनीलं
काञ्च्यां च भान्ति सहजान्यधुना त्विमानि॥१०॥

॥ इति तोटकवर्गः प्रथमः ॥

---

इति कौतुकं गतवति क्षितिपे
सुरतानि चाविरतमाचरति ।
ललनाऽत्यशङ्कत नरप्रकृतौ
सखिचापलं नृषु निसर्गकृतम् ॥ ११ ॥
अनुवासरं नगरमाविशति
क्षणमारुणीमपि निशामयति ।
दयिते वियोगविकृतां सशुचं
विजने जगाद सुतनुं स्वजनः ॥ १२ ॥
नवरत्नदाम जनकेन पुरा
भवतीमवेक्ष्य सति दत्तमिह ।

तव कान्तकार्मणदकान्तियुतं
वपुरन्तरं वितरतीदमिति ॥ १३ ॥
वपुराप सा भुवनसंवननं
मणिदाम धारितवती सपदि ।
रविधाम रम्यमिव पद्मवती
यदिहानुरक्तिरिति वक्ति जनः ॥ १४ ॥
सह सुन्दरीभिरनुवेलमिमां
बलिवन्दिनीभिरुपयातु सभाम् ।
नवयौवनां चिरमवेक्ष्य नृपः
सुकृतिं जगाद सुकृती विकृतः ॥ १५ ॥
इयमालि का वद वधूस्तरुणी
परिवादिनीमतनु वादयति ।
मधुरैः स्वरप्रणयनैः कुशला
बत यक्षराजमपरोक्षयितुम् ॥ १६ ॥
दिवि कौतुकाय भगवान् हि पुरा
व्यधितोर्वशीं सकलकान्तिमयीम् ।
अधुना जगत्त्रयकुतूहलदां
महिलामिमामिति मम प्रतिभा ॥ १७ ॥
स्मरनाथयौवनमहे सुदृशः
सहजाः समेत्य विहरन्ति मुदा ।
सितरुक्सुधाकलशकौस्तुभमा
वदनस्तनेषु ललितच्छलतः ॥ १८ ॥

चरणारुणाब्जकरकोकनद-
द्वितये मुखाब्जमिति चारुदृशः ।
कुसुमेषुपञ्चकमिदं विदितं
कुसुमायुधस्य कितवस्य मया ॥ १९ ॥

दत्तापाङ्गा मनाङ् मे स्मितललितमुखी लज्जयाऽधोमुखी द्रा-
गाविर्घर्माम्बुबिन्दुप्रतिममणिगणा गीतवादित्रगोष्ठ्याम् ।
देवी किं वोपदेवी किमहिपतिसुता देवमाया किमन्या
या वा का वाऽस्तु कान्ता यदि मम न भवेन्नो भवेयं भुजिष्ये॥

॥ इति चित्रावर्गो द्वितीयः ॥

---

रम्येषु चार्थेषु रतिं व्रजन्तं
स्मरज्वरोत्तप्तमिमं विहस्तम् ।
प्रेक्ष्य प्रभुं प्रार्थयदालिरेत्य
शनैः सभास्तम्भतिरोहितां ताम् ॥ २१ ॥

बाले न पाणिग्रहणोचितास्ते
शुभं विना केचन मानवेन्द्राः ।
चन्द्रं विना बिभ्रति चन्द्रिकां के
सकाममेनं सति कामयेति ॥ २२ ॥

मन्दाक्षमन्दध्वनिसुस्मितोचे
शुभं सुकार्यं न वृणीत का स्त्री ।
अन्याङ्गनालिङ्गनसङ्गलोलं
न नः कुलीनाः किल संस्पृशन्ति ॥ २३ ॥

श्रुत्वाऽनुरक्तैः कविरुक्तमेतत्
स्मरन् सुमत्याश्च ततास तप्तः ।
रागानलाभ्यामभितो ज्वलद्भ्यां
दवानलाभ्यामिव हस्तिमल्लः ॥ २४ ॥
आहूय राजा महिषीं सबाष्पो
मुनिर्विवक्षन्नपि धर्मभीतः ।
किं शोचसीशेति तयाऽनुयुक्तो
जगाद पत्नीं परिरभ्य दीनः ॥ २५ ॥
सन्ध्यावलीवत्सुगुणावलीं त्वां
विहाय तत्कान्तवदन्वशोचम् ।
विप्राभ्युपाया कथमप्युपाया
नलं विदर्भेन्द्रसुतेव मां त्वम् ॥ २६ ॥
हारप्रभावात्प्रतिभा तमस्था
न तेऽस्तु तातेति गुरोर्वरो मे ।
अप्यारुणीवन्नियमार्थिनीयं
मनो ममाकर्षति चित्रमेवम् ॥ २७ ॥
त्वद्ब्रह्मचर्याय हि सा वदन्ती
न धर्मपत्नीषु रतिं रुणद्धि ।
एवं ब्रुवाणां रमणं वरोरुं
सलज्जमाव्रज्य वधूर्ववन्दे ॥ २८ ॥
सङ्गृह्य पाणिं नवमालिकाया
द्विजेन्द्रपार्श्वे सुमतेर्मतेन ।

रेमे स रामाद्वितयेन तेन
महोदयेनोदयनो यथाऽग्रे ॥ २९ ॥
नीत्याऽनयैव शुभया बिभराम्बभूवे
रूपान्तरं च गदितं मणिमालिनीति ।
सौख्यं नृपो द्विगुणमाप तया यदंसे
रत्नस्रजः सुरभिता भुवनानि भूरि ॥ ३० ॥

॥ इति द्वितीयचतुर्थपादोपेन्द्रवज्रावर्गस्तृतीयः ॥

---

त्रिरूपिणीं योगविशारदां तां
प्राबोधि कान्तोऽमितकौतुकान्तः ।
त्रिरूपलावण्यगुणैकपात्रं
गात्रं दधानां पुनरभ्यनन्दत् ॥ ३१ ॥
शशिप्रकाशामनुरागरम्यां
नानामणिश्रेणिघृणिप्रदीप्ताम् ।
घनस्तनीं त्रस्तमृगाङ्गनाक्षीं
शातोदरीं प्राप सवोपरोधे ॥ ३२ ॥
प्रभेव भानुं कमिवात्मवाणी
ज्योत्स्नेव सोमं शिखिनं शिखेव ।
शिवेव कीर्तिर्जगदेकनाथं
नामुक्त पत्नी स्वपतिं क्षणं च ॥ ३३ ॥
अभेदमानावितरेतरं तौ
सौख्यानुभूती अनुसन्दधानौ ।

सदा रमेतां प्रणयातिरेका-
द्ग्राम्यं च धर्म्यामविहाय भङ्गीम् ॥ ३४ ॥
कुलाङ्गनानां किल नातिवर्ण्या
लावण्यलक्ष्मीः सुरतं च हन्त ।
अतिक्रमं चेदकृत प्रमादा-
द्वाचालतां मे क्षमतां प्रजेशः ॥ ३५ ॥
अधत्त गर्भं जगति प्रगल्भं
सा सार्वभौमाद्धरतस्य पुत्री ।
कनत्प्रकाशं विहितं च काला-
द्वैडूर्यमग्र्येव विडूरभूमिः ॥ ३६ ॥
सुतान्तरायं न सुतान्तरायं
प्रारब्धकर्मारिगणं स विद्वान् ।
पुरान्तरङ्गं न पुरान्तरङ्गं
भीतो मुकुन्दं शरणं जगाम ॥ ३७ ॥
गुरौ बलीयस्युदिते प्रशान्ते ।
क्रूरे च पूर्णे सति भद्रयोगे ।
शुभे.....................
..................... ॥ ३८ ॥
सुतं स्वमालोकयता शुभेन
तारुण्यलावण्यविभाविभातम् ।
अवैक्षि लक्ष्मीपतिरत्र साक्षा-
त्तस्याग्रतोऽनुग्रहणाय तिष्ठन् ॥ ३९ ॥

चारुभ्यां चामराभ्यामुपगतमभितः श्रीधराभ्यां प्रियाभ्यां
मुक्तामुक्तातपत्रं शशिधवलमधोऽधोऽति जाज्वल्यमानम्।
तार्क्ष्यांसन्यस्तहस्तं स्वनदलिनलिनं म्लानहीनं धुनानं
व्यक्तं विष्णुं स पश्यन् समनमदवनावुन्नमन्नेव धन्यः ॥

॥ इति प्रथमतृतीयपादोपेन्द्रवज्रावर्गश्चतुर्थः ॥

---

लोकैककान्तस्य हरेः सरूपं
शरीरधर्मैं रहितं किशोरम् ।
सुतं मुदाऽऽश्लिष्य ततः कुरूपो
दृष्ट्या हरेः स्पष्टमभूत्स भूपः ॥ ४१ ॥
नाथं बहिश्चेतसि चोदयन्तं
वरान्वृणीष्वेत्यभिचोदयन्तम् ।
उवाच राजाऽनुपमोदयं तं
सर्वेन्द्रियाणि प्रतिमोदयन्तम् ॥ ४२ ॥
इष्टान् वरांश्चेदिशसीश मे स्या-
द्भवे भवे दृष्टिरनारतैषा ।
न कामये कामदुहस्त्वदल्पं
चिन्तामणिश्रेणिसमां त्यजंस्ताम् ॥ ४३ ॥
प्रादाद्वरं तं प्रवरं वराणा-
मिति प्रभुं प्रार्थयते शुभाय ।
सुताय नामापि ददावनामा
सद्बोधसूर्योऽयमिति प्रबोद्धे ॥ ४४ ॥

अन्यानपेक्षोऽपि निसर्गबोधै-
विवेद विद्याः सकलाः स बालः ।
प्रकाशयेद्वस्तु निजप्रकाशै-
र्दीपानपेक्षो मिहिरोऽपि बालः ॥ ४५ ॥

संनाहभेर्याऽऽह्वयदात्मपक्षान्
पुरेव काली सहितोपकाल्या ।
सुतं सुमत्यास्तमवेत्य सत्याः
पाश्चात्यमप्यात्मकुलैकशत्रुम् ॥ ४६ ॥

ज्येष्ठं प्रकालं पुरतो निधाय
प्रतिष्ठते स्मारुणिरादिवैरी ।
षडस्य पुत्राः प्रययुः स्नुषाश्च
तत्पुत्रपौत्राश्च गणा अगण्याः ॥ ४७ ॥

पुत्रः सुमत्याः पुरि जातमात्रो
निहन्यतां स्यात् प्रबलोऽप्यकम्प्यः ।
महामयो यद्वदिति ब्रुवाणः
प्रत्यैक्ष्यतात्रारुणिवर्ग आरात् ॥ ४८ ॥

प्राप्तान् परान् पापतमान्निहन्तुं
कुमार एको निरियाय वीरः ।
नमन्त्रशक्तिः क्वचिदेकवासो
नान्यः षडास्यादनुमेयस्त्वनुः ॥ ४९ ॥

मातुः शोकततिं च मातुलजयं पीडां पितुर्यावनैः
स्मृत्वा कारुणिको रिपूंश्च परितो दृष्ट्वा शठान् वारिणः ।

तान्नारायणकिङ्करो नृपसुतो नारायणास्त्राग्निना
घोराघोरुगणान् क्षणेन तृणवद्भस्मीचकारोच्चकैः ॥ ५० ॥

॥ इति द्वितीयतृतीयपादोपेन्द्रवज्रावर्गः पंचमः ॥

---

क्षिप्तद्विट्पक्षं पुत्रमाश्लिष्यतोस्तं
मातापित्रोस्तन्मातुलानां च कामम् ।
मानं तन्वाना याऽपतत्पुष्पमाला
मन्दाराभ्यच्छा कीर्तिमालोत्पपात ॥ ५१ ॥
आमीलनेत्रं नम्रगात्रं विनीत्या
जोषं पादाब्जं वन्दमानं कुमारम् ।
सद्योजातं सद्योग्यविद्यं विजिष्णुं
ब्रह्मेवाशिक्षद्ब्राह्मणः पूर्णकामः ॥ ५२ ॥
काल्यामस्तायामस्त्रभासोपकाल्यां
साकं दग्धायां पुत्रपौत्रैः सगोत्रैः ।
प्राज्यं साम्राज्यं भूषितं दूषितं तैः
पित्रेऽसौ मोदादार्पयद्दर्पहीनः ॥ ५३ ॥
पुर्यन्तःपुर्योः पर्यटन्वायुवेगो
मार्गं मार्गज्ञैः किङ्करैः शोधयित्वा ।
रथ्यावीथ्यन्ते यक्षधिष्ण्ये सजानिं
भूपं बल्यर्थं दीक्षयामास दक्षः ॥ ५४ ॥
स्नेहेनाहीनो वश्यवर्तीक्षणीयो
दीप्तो दम्पत्योरग्रतोऽपत्यदीपः ।

पद्माक्षं साक्षात्साक्षिणं वीक्षयंस्तं
तन्वन्नानन्दं नन्दनः सम्यगासीत् ॥ ५५ ॥
पुष्पैः सौवर्णैः सौरभाढ्यैर्महार्घै-
र्मार्लैर्येर्दीप्तै रत्नराजैरसङ्ख्यैः ।
अन्यैश्चोच्चाङ्गैरार्चिचच्चक्रवर्ती
वृन्दे गोविन्दं वन्दिनां वन्दमाने ॥ ५६ ॥
शीर्णे विक्रान्त्या यावनानां विरोधे
मुक्त्वा स्थानीयं दुर्गमन्यद्वरिष्ठम् ।
कृष्णस्याक्लिष्टः कृष्णवद्योगशक्त्या
पित्रादीन् स्वीयान्नागरांश्चैव निन्ये ॥ ५७ ॥
ऊर्मिभ्यस्तान् संवर्जयन्त्यां निकामं
कामैः पूर्णायामेव काशीनगर्याम् ।
सप्तद्वीपाद्गोमण्डलान्द्वयायलब्धं
कोशं सौवर्णं प्रार्पयत्पार्थिवाय ॥ ५८ ॥
मातुः पोतः संसेविनां कल्पवृक्ष-
स्तातस्यात्मेव द्वेषिणां कालदण्डः ।
वन्द्यो लोकानां किङ्करो वैष्णवानां
विष्णोः पादाब्जेऽदीपि सद्बोधसूर्यः ॥ ५९ ॥
अमात्यैः कदाचिच्चरन्मण्डलाल्यां
सुमत्या त्रिमूर्त्या सलीलं कदाचित् ।
बभौ सार्वभौमो हरेः पादपार्श्वे
सदाभासमाने सदा भासमाने ॥ ६० ॥

उदयति बृहदाये यत्र सद्बोधसूर्ये
स्वयमुदयमयासीच्छोभमानः शुभोऽयम् ।
असति तमसि विष्णोरुच्चकाशे पदान्तं
सुजनसरसिजानामुल्ललासातुला श्रीः ॥ ६१ ॥

॥ इति वैश्वदेवीवर्गः षष्ठः ॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुतनारायणपण्डिताचार्यविरचिते शुभोदये अभ्युदयकाण्डः पंचमः ॥ ५ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---



चक्रबन्धः (प्रादुर्भावकाण्डः ७;७०) [पृष्ठम्: २६]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | रा | मा | प | र | मा | र | म्या |
| स | रा | मा | प | र | मा | र | दा |
| दा | र | मा | प | र | मा | य | त्ते |
| या | र | मा | प | र | मा | य | या |

मुरजबन्धः (प्रादुर्भावकाण्डः ६;५६) [पृष्ठम्: २४]

ना रा य ण र मा ना थ दे वा द्व र गि रः पि तः

न रा गु ण स मा स्ते थ नै वा सु र न रः कु तः

